*श्रीमद्वल्लभाचार्यविरचितं*
*श्रीमद्ब्रह्मसूत्राणुभाष्यम्*
*चतुर्थोअध्यायः*

## Contents

## प्रथमः पादः

समन्वयेनाविरोधात् साधनैर्ब्रह्मविद् यदि।
तस्याग्रिमव्यवस्था या सा चतुर्थे विविच्यते॥1॥
जीवतो म्रियमाणस्य गच्छतः सफलस्य च।
अतो ब्रह्मविदा कार्यम् एवमेव न चान्यथा॥2॥
तामसीं बुद्धिम् आश्रित्य ये मूढाः सर्वविप्लवम्।

वदन्ति शास्त्रनाशाय सद्भिः शोच्याश्च येनु तान्॥3॥
ब्रह्मविद्ग्गमनाभावः शतांशेनापि चेद् भवेत्।
शास्त्रमेतद् वृथा जातं सर्वसूत्रविनाशतः॥4॥
स्वाप्ययस्य च सम्पत्तेरत्र ब्रह्मगतिश्रुती।
अन्यथा न श्रुतेरर्थः स्याच्चेद् व्यासो वदेन्न किम्॥5॥
तामसीं बुद्धिम् आश्रित्य या मुक्तिः कैश्चिद् उच्यते।
सा सुषुप्तिश्रुतेरर्थो मोहादेवान्यथामतिः॥6॥
अतो ब्रह्मविदः कार्यं जीवतः पूर्वम् उच्यते।
आवृत्तिः श्रवणादीनां नवकृत्वोपदेशतः॥7॥
दर्शनार्थत्वतो लिङ्गादपि व्रीह्यवघातवत्।
आवृत्तौ श्रवणादीनाम् आत्मेति स्याद् दृढा मतिः॥8॥
आपाततो दर्शनं तद् अभेदेनापि बोध्यते।
प्रतीकोपासनादीनां 1नैवं भावो हि जायते॥9॥
आलम्बनार्थं तत्रापि ब्रह्मदृष्टिर्विशिष्यते।
आदित्यादिब्रह्मदृष्टेरङ्गत्वं न स्वतन्त्रता॥10॥
मनने च निदिध्यासे विशेषश्चोच्यतेऽधुना।
आसनादि षडङ्गैस्तु चित्तं श्रौतार्थएव हि॥11॥
धारयेद् आमतेरेवं ततः सिद्धिम् अवाप्स्यति।
धर्माधर्मभयं तस्य नास्त्येवेति विनिश्चयः॥12॥
अग्निहोत्रादिकं कार्यं सन्न्यासः फलएव हि।
षोढा चेत् पुरुषो व्यक्तः प्रारब्धान्ते फलं भवेत्॥13॥
एतावान् प्रथमे पादे निर्णयः सूत्रकृत्कृतः।
द्वितीये म्रियमाणस्य सर्वेन्द्रियलयः पुरा॥14॥
लिङ्गस्यापि शरीरस्य नाड्योत्क्रान्तिरिहोच्यते।
दिनायनकृतो नास्य विशेषोऽस्तीति चोच्यते॥15॥
तृतीये क्रममुक्तौ यो मार्गो यस्य श्रुतेर्मतः।
तन्निर्धारोऽन्यमार्गीयाणाम् अप्राप्यत्वं च वर्ण्यते॥16॥
गन्तव्यं च परं ब्रह्म कार्यो लोकस्तु नेति च।
तुरीये पुष्टिमर्यादा-भेदेन फलमुच्यते॥17॥
प्रभोरेव फलत्वं तन्निर्दोषत्वं च वर्ण्यते।
लीलानित्यत्वतः पूर्णगुणत्वं च ततोऽखिलम्॥18॥

अस्य फलप्रकरणत्वेऽपि साधनरूपस्यापि श्रवणस्य अन्तरङ्गत्वं ज्ञापयितुं तन्निर्धारमपि आह.

## आवृत्तिरसकृदुपदेशात्॥1॥ (4।1।1)

"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृहदा. उप.4।5।6) इत्यादिवाक्यैः विहितं श्रवणादिकं किं सकृदेव कर्तव्यम्, उत असकृद्? इति भवति संशयः. किं तावत् प्राप्तं? सकृदेव इति, तावतैव शास्त्रार्थस्य सम्पत्तेः. नच तण्डुलनिष्पत्तिफलकावघातस्येव दर्शनफलकानां श्रवणादीनां तत्सिद्धिपर्यन्तम् आवृत्तिः न्यायप्राप्ता इति वाच्यम्. अवघातस्य वितुषीकरणात्मकदृष्टद्वारकत्वेन तथात्वम् अस्तु नाम, प्रकृतेतु अदृष्टद्वार-कत्वात् सकृत्कृतेनैव अदृष्टद्वारा फलसम्पादनसम्भवाद् आवृत्तिः अप्रयोजिका इति प्राप्ते, उच्यते. आवृत्तिरेव श्रवणादीनां श्रुत्यभिमता. कुतः? असकृद् उपदेशात्. छान्दोग्ये श्वेतकेतूपाख्याने "ऐतदात्म्यम् इदं सर्वं, तत् सत्यं, स आत्मा तत् त्वमसि श्वेतकेतो" (छान्दो.उप.6।8।7) इतिवाक्येन जड-जीवयोः ब्रह्मात्मत्वं नवकृत्व उपदिष्टवान्. तथाच सकृदुपदेशेनैव चेद् अर्थसिद्धिः स्यात्, तदा एकमेव अर्थम् एकस्मा एकदैव असकृद् न उपदिशेत्, प्रयोजनाभावात्. एतेन अवघातवद् अन्तःकरणदोषनिवर्तनं दृष्टं द्वारम् अन्येषाम् उपदेशानां, चरमस्य तस्य ज्ञानसाधकत्वम् इति मन्तव्यम्॥1॥

अत्रैव हेत्वन्तरम् आह

लिङ्गाच्च॥2॥

श्रुत्यनुमापकत्वेन स्मृतिः लिङ्गम् इति उच्यते. साच, "यथा-यथात्मा परिमृज्यते असौ मत्पुण्यगाथाश्रवणाभिधानैः, तथा-तथा पश्यति तत्त्वसूक्ष्मं चक्षुः यथैव अञ्जनसम्प्रयुक्तम्"(भाग.पुरा.11।14।26) इत्यादिरूपा, तदावृत्तिमेव फलसाधकत्वेन आह. अत्र दृष्टान्तेनापि दृष्टद्वारकत्वं श्रवणादीनां सूच्यते. "आत्मा वाऽरे द्रष्टव्यः"(बृहदा.उप.4।5।6) इति पदेन श्रवणादीनां फलात्मकं दर्शनं पूर्वम् उक्त्वा, "श्रोतव्यो मन्तव्यः"(पूर्ववद्) इत्यादिना तत्साधनानि पश्चाद् यद् आह तेन आत्मनः परोक्षमपि ज्ञानम् अवान्तरफलरूपम् इति भक्तिमार्गे परमफलरूप-तत्सजातीयत्वेन च फलमध्यपात्येव इति श्रुत्यभिमतम् इति ज्ञायते. तेन सूत्रकृदपि फलप्रकरणेऽपि साधनविचारं चकार इति निगूढाशयः.

तथापि "शाब्दक्रमाद् अर्थक्रमो बलीयान्" इति न्यायाद् 'द्रष्टव्यः' इति पदस्य पश्चात्सम्बन्धेतु उक्तरीतिः न अवसरं प्राप्नोतीति प्रकृतविचारस्य फलप्रकरणासङ्गतत्वम् आपततीति प्रकारान्तरेण सूत्रार्थः उच्यते. आवृत्तिः असकृदुपदेशात्. श्रुतिः हि कर्मज्ञानभक्तीः साक्षात्परम्पराभेदेन पुरुषार्थ-साधनत्वेन हीनमध्यमोत्तमाधिकारिणः प्रति कर्तव्यत्वेन प्रतिपादयति. तत्र तेषां स्वरूपं तृतीये अध्याये बादरायणेन प्रतिपादितम्. अथ तुरीये अध्याये तेषां फलं चिन्त्यते. तत्र आदौ कर्ममार्गस्य फलम् उच्यते.

ज्ञानभक्त्योरेव क्रमेण उत्तमात्युत्तमफलकत्वम्, अतः तत्साधनत्वेनैव तत्कर्तव्यं, नतु स्वातन्त्र्येण इति ज्ञापयितुम् आवृत्तिः इति. कर्ममार्गस्य आवृत्तिः पुनर्जन्मफलं तदपि असकृत्. इदं पदम् आवृत्या उभयत्रापि सम्बध्यते. तथाच अत्र प्रमाणापेक्षायां तद् आह

हेतुत्वेन असकृद् उपदेशाद् इति. श्रुतौ कर्ममार्गे पुनर्जन्म असकृद् उपदिश्यते यतः. अन्यथा सकृदुपदेशेनैव तदवगमेऽपि असकृदुपदेशो व्यर्थः स्यात्. अतः तथा इति अर्थः. वाजसनेयिशाखायां पठ्यते,

"एवमेव अयं शारीर आत्मैभ्यो अङ्गेभ्यः सम्प्रमुच्य पुनः प्रतिन्यायं प्रतियो-न्याद्रवति प्राणायैव"(बृहदा.उप.4।3।36) इति.

तत्रैव पुनः

"तेनैव प्रद्योतेन एष आत्मा निष्क्रामति" (बृहदा.उप.4।4।2) इत्युपक्रम्य पठ्यते

"तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" (पूर्ववद्) इति.

तत्रैव एतद् अनुपदमेव "तद् यथा तृणजलायुका" (बृहदा.उप.4।4। 3) इत्युपक्रम्य पठ्यते

"एवमेव अयं पुरुष इदं शरीरं निहत्य अविद्यां गमयित्वा अन्यन् नवतरं कल्याणतरं रूपं तनुते पित्यं वा गान्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वा अन्येभ्यो वा भूतेभ्यः" (बृहदा.उप.4।4।4) इति. तत्रैव अग्रे पठ्यते,

"प्राप्यान्तं कर्मणः तस्य यत्किञ्च इह करोति अयं, तस्माद् लोकात् पुनरेति अस्मै लोकाय कर्मणः" (बृहदा.उप.4।4।6) इति.

अत्र हेत्वन्तरम् आह लिङ्गाच्च. वेदानुमापकत्वेन स्मृतिः लिङ्गम् इति उच्यते. साच भगवद्‌गीतासु "त्रैविद्या माम्"(भग.गीता9।20) इत्युपक्रम्य पठ्यते "एवं त्रयीधर्मम् अनुप्रपन्ना गतागतं कामकामा लभन्ते"(भग.गीता 9।21) इति. "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन"(भग.गीता 8।16) इति च.

अथवा "यथाकारी यथाचारी तथा भवति. साधुकारी साधुः भवति. पापकारी पापो भवति. पुण्यः पुण्येन कर्मणा भवति. पापः पापेन" (बृहदा.उप. 4।4।5) इति श्रुतिः वर्तमानजन्मकर्मणोः पूर्वजन्मसम्बन्धिकर्मानुमापकत्वं वदतीति कर्मिणः पुनर्जन्म आवश्यकम् इति ज्ञायते. एवं सति लिङ्गत्वेन निरूपणाद् इति अर्थः सम्पद्यते. निवृत्तिमार्गीयस्यापि तस्य ज्ञानोपकर्तृत्वमात्रं, नतु जन्मनिवर्तकत्वं, मानाभावात्॥2॥

इति चतुर्थाध्याये प्रथमपादे प्रथमम् आवृत्यधिकरणम्॥1॥

एवं कर्मफलं विचार्य ज्ञानफलं विचारयति.

## आत्मेति तूपगच्छन्ति ग्राह्यन्ति च॥3॥ (4।1।2)

पूर्वार्थनिरूपणव्यवच्छेदाय 'तु'शब्दः. ज्ञानिनो हि* भगवन्तम् आत्मत्वेनैव उपासते. तस्याः नैरन्तर्ये अनेकजन्मभिः तथैव तेषां हृदि भगवान् स्फुरति तदा स्वानन्दांशस्यापि आविर्भावाद् ब्रह्मभूतः सन् आत्मत्वेनैव ब्रह्म स्फुरितमिति तदानन्दात्मकः सन् तम् अनुभवति. एवं स्थितः प्रारब्धसमाप्तौ देहापगमे तत्रैव प्रविष्टो भवति. एतादृशः

सर्वोपकारीति परार्थमपि तस्मै भगवता ज्ञानं दत्तम् इति प्रवचनमपि तस्य फलान्तःपातीति अधिकारिणि उपस्थिते तथैव उपदिशति च. एतदेव आह आत्मा इत्यादिना. उप समीपे गमनं प्रवेशः इति यावत्.

अथवा. ननु ज्ञान-भक्त्योः अनावृत्तिः फलम्, अतः उत्तमे ते, नतु कर्म इति आशयेन कर्मणः फलम् आवृत्तिः इति यद् निरूपितं, तत्र इदं चिन्त्यते : "न स पुनरावर्तते" (छान्दो.उप.8।15।1) इति श्रुतिः सर्वथा अनावृत्तिम् आह, उत सावधिकीं ताम् 'अमर'शब्देन तन्निवृत्तिमिव? किम् अत्र युक्तम्? सावधिकीमेव इति. तथाहि. पूर्वं कर्मनैयत्यस्य त्वयापि अङ्गीकार्यत्वात् तस्य प्ररोहैकस्वभावत्त्वात् तस्य दुरतिक्रमत्वात् तत्फलानुभवस्य आवश्यकत्वात्. अपिच, "य एनं विदुः" (बृहदा.उप.4।4।22) इति श्रुतेः सति ज्ञाने हि सा. "यतो वाचः" (तैत्ति.उप.2।9), "अगृहो न हि गृह्यते"(बृहदा.उप.4।4। 22) इत्यादिश्रुतिभ्यो ब्रह्मज्ञानासम्भवात्. इतएव भक्तिरपि प्रत्युक्ता वेदितव्या. ज्ञानाविषये स्नेहासम्भवात्. किञ्च "सर्वस्य वशी सर्वस्येशानः" (बृहदा.उप. 4।4।22) इत्यादिश्रुतिभ्यो "यस्य अवतारकर्माणि गायन्ति हि अस्मदादयः, न यं विदन्ति तत्त्वेन" (भाग.पुरा.2।6।37) इत्यादिस्मृतिभ्यश्च का प्रत्याशा जीवस्य अतिहीनस्य तत्प्राप्तौ? अतएव उपदेशासम्भवोऽपि इति प्राप्ते प्रत्याह आत्मेति इत्यादिना. 'तु'शब्दः पूर्वपक्षनिरासकः.

अत्र अयम् आशयः : सत्यम् उक्तं भवता. तत्र उच्यते. यथा अगृह्यत्वातिमहत्त्वादिधर्माः भगवति सन्ति, तथा सर्वात्मत्वमपि. "यः आत्मनि तिष्ठन्"(बृहदा.उप.3।7।...)इत्यादिश्रुतिषु आत्मत्वेनैव उक्तेः. सर्वधर्मा-श्रयत्वेऽपि यदा यं धर्मं पुरस्कृत्य लीलां करोति, तत्कार्यमेव तदा सम्पद्यते, हितकारीत्वस्वभावत्वात् तस्य. एवं सति यस्मिन् पुरुषे यदा आत्मत्वेन लीलां करोति, तदा स्वप्राप्त्यनुकूलप्रयत्नवन्तं विधाय आत्मानं प्रापयति. ननु उक्तं दुरतिक्रमः कर्मस्वभावः इति. न एषः दोषः. न हि अन्नरसपाकाय जग्धम् औषधमपि गौरवाय भवति, तेन न तन्निवृत्तिः वा. व्यापादनैकस्वभावमपि विषम् आशीविषं तदपगमपटुतरनिगमसङ्गमो न अपगयमति वा. तथा भगवदर्पितं तदर्थं च कृतं कर्म न कर्मनाशाय भवतीति न वक्तुं शक्यम्. "कर्म-मोक्षाय कर्माणी विधत्ते ह्यगदं यथा"(भाग.पुरा.11।3।44) इति वाक्यात्. अगृह्यत्व-गृह्यत्व-विरोधापहारस्तु जीवसामर्थ्येश्वरेच्छाभ्यां पुरैव कृतइति न अधिकम् अत्र निरूप्यम्. 'इति' शब्दो हेत्वर्थे. तथाच भगवान् आत्मा भवति सर्वेषां जीवानाम् अतो हेतोः उक्तरीत्या तदनुग्रहेण तम् उपगच्छन्ति. ज्ञानमार्गे अङ्गीकृतास्तु आत्मत्वेनैव ज्ञानाद् 'उप'समीपएव गच्छन्ति, उक्तरीत्या अक्षरात्मके तत्रैव प्रविष्टाः भवन्ति इति अर्थः. भक्तिमार्गे अङ्गीकृतास्तु साक्षात् प्रकटे पुरुषोत्तमे सति तद्भजनार्थम् 'उप' समीपं गच्छन्ति इति अर्थः. एवं श्लेषोक्तिः इयम् इति ज्ञायते. सम्प्रदायानुवृत्तिरपि भगवदिङ्गितेति एतादृशाः स्वयं येन मार्गेण फलं प्राप्ताः, तं मार्गम् अन्यानपि ग्राह्यन्ति उपदेशैः. अत्र उभयत्रापि आत्मत्वमेव

हेतुः, अन्यथा आत्मारामस्य सर्वनिरपेक्षस्य एवंकरणासम्भवेन मोक्षमार्गाप्रसिद्धिरेव स्यात्. तस्मात् सर्वथा अनावृत्तिरेव श्रुत्यभिमता इति ज्ञेयम्॥3॥

ननु आत्मत्वेन उक्तिः उपासनार्था इति न उक्तं साधीयः इत्यतः उत्तरं पठति.

न प्रतीकेन हि सः॥4॥

अतद्रूपे तत्त्वेन उपासनं हि प्रतीकम् इति उच्यते. तथाच तादृशेन तेन सः मोक्षो न भवति इति अर्थः. श्रुतिसिद्धत्वाद् नास्ति मोक्षः इति न वक्तुं शक्यम् इति भावः.

अथवा आत्मत्वेन उक्तिः उपासनार्था इति वदन् वादी वक्तव्यः. फलार्थमेव तत्. फलञ्च श्रुत्युक्तः तत्प्रवेशएव इति त्वयापि वाच्यम्. एवं सति आदौ ज्ञानमार्गे अनुपपत्तिम् आह. न प्रतीकेन आत्मभूते ज्ञानिनः उपगमः पूर्वोक्तः प्रवेशः सम्भवति इति शेषः. भक्तिमार्गेऽपि ताम् आह न हि सः इति. न हि प्रतीकोपासने सः लोकवेद-प्रसिद्धः पुरुषोत्तमो अस्ति उपास्यत्वेन, येन तत्प्राकट्यं स्यात्, तद् उपगमनं च इति अर्थः. एवं ज्ञान-भक्त्योः फलसत्ता साधिता॥4॥

ननु "सर्वं खलु इदं ब्रह्म" (छान्दो.उप.3।14।1), "आत्मैव इदं सर्वम्" (छान्दो.उप.7।25।2) इत्यादिश्रुतयः सर्वत्र ब्रह्मदृष्टिं मुक्तिसाधनत्वेन उपदिशन्ति. साच प्रतीकात्मिकैवेति कथं प्रतीकोपासनस्य न मोक्षसाधकत्वम् इति प्राप्ते उत्तरम् आह

ब्रह्मदृष्टिः उत्कर्षात्॥5॥

सर्वत्र ब्रह्मदृष्टिः न प्रतीकात्मिका, सर्वस्य वस्तुतो ब्रह्मात्मकत्वात्. सा च न उपदेशसाध्या, अतो न उपदिश्यते, किन्तु अनूद्यते. सातु अधिकारोत्कर्षात् स्वतएव भवतीति प्रतीकोपासनस्य न मुक्तिसाधनत्वम् इति साधूक्तम्. एतदेव उक्तम् अनेन सूत्रेण॥5॥

॥इति चतुर्थाध्याये प्रथमपादे द्वितीयम् आत्माधिकरणम्॥2॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः॥6॥ (4।1।3)

छान्दोग्ये "अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वम् आत्मानम् उपास्स इति, आदित्यमेव भगवो राजन् इति होवाच"(छान्दो.उप.5।13।1) इति. "अथ होवाच इन्द्रद्युम्नम्"(छान्दो.उप.5।14।1) इत्युपक्रम्य, "कं त्वम् आत्मानम् उपास्स इति, वायुमेव भगवो राजन् इति होवाच" (तत्रैव) इति.

एवमेव अग्रे प्रश्नभेदेन वक्तृभेदेन आकाशापःप्रभृतयः आत्मत्वेन उपासनाविषया उक्ताः. तत्रैव "असौ वा आदित्यो देवमधु" (छान्दो.उप. 3।1।1) इत्युपक्रम्य अन्ते पठ्यते "य एतमेवं विद्वान् आदित्यं ब्रह्म इति उपास्ते" (छान्दा.उप.5।19।4) इति.

अत्र इदं चिन्त्यते : अत्र प्रतीकोपासनत्वम् अस्ति, न वा? इति. अस्ति इति पूर्वः पक्षः. तथाहि. "सर्वं खलु इदं ब्रह्म" (छान्द.उप.3।14।1) इति श्रुतौ सर्वम् अनूद्य ब्रह्मत्वं तत्र बोध्यतइति न क्वचित् प्रतीकोपासनम् अस्ति इति हि पूर्वं निरूपितम्. तच्च उक्तश्रुतिभिः प्रत्येकं तत्त्वेन उपास्यत्वेन उक्त्या न उपपद्यते. ब्रह्मणः एकत्वाद् एकप्रकारकेणैव उपासनेन

सर्वेषां फलसिद्धेः, पृथक्-पृथग् उक्तौ गौरवात्, प्रयोजनविशेषाभावाच्च. तादृशाधिकाराभावात् पृथक् तदुक्तिः इति चेद्, न, सर्वत्र सदा तद्भावनायां तथानुभवस्यापि सम्भवात्. एवं सति वस्तुतः सर्वस्य ब्रह्मत्वं न अभिमतं, किन्तु यथा आदित्यादीनां तत् तथा, तथा सर्वस्यापीति प्रतीकोपासनत्वमेव सर्वत्र. तेनैव फलम् इति प्राप्ते प्रतिवदति.

आदित्यादौ या ब्रह्मत्वमतयः उच्यन्ते, तास्तु साकारस्यैव ब्रह्मणो व्यापकत्वात् तस्य प्रत्येकमपि अङ्गम् उपासितं फलदमिति एकैकाङ्गविषयिण्यः ताः विधीयन्ते. उपपन्नं च एतत्. न हि साकार-व्यापकब्रह्मणो अङ्गं न ब्रह्म, अतो न प्रतीकोपासनत्वं तत्र.

अपरञ्च. "असौ वा आदित्यो देवमधु" (छान्दो.उप.3।1।1) इति उक्त्वा तस्य प्रतिदिक्करश्मीनां कृपावलोकनरूपाणां मधुत्वं निरूप्य,

"तद् यत् प्रथम् अममृतं तद् वसव उपजीवन्ति अग्निना मुखेन, न वै देवा अश्नन्ति न पिबन्ति एतदेव अमृतं दृष्ट्वा तृप्यन्ति, त एतदेव रूपम् अभिसंविशन्ति एतस्माद् रूपाद् उद्यन्ति" (छान्दो.उप. 3।10।2)

इति पठ्यते. तथाच दर्शनमात्रेण अन्यधर्मनिवृत्तिः, तस्यैव स्वतन्त्रपुरुषार्थत्वेन ज्ञानम् अतिशयितस्नेहज-विगाढभावेन तत्रैव लयः, पुनः तद्दर्शनानन्दानुभवार्थं भगवानेव कृपया पुनः पूर्वभावं सम्पादयतीति तस्माद् रूपाद् उदयश्च. एतत् सर्वं भगवदङ्गत्वएव उपपद्यते इत्यपि हेत्वभिप्रेतो अर्थो ज्ञेयः. न हि प्रतीकत्वे इदं सर्वं सम्भवति, भक्तिमार्गीयत्वाद् अस्य अर्थस्य इति भावः. अङ्गानां भगवत्स्वरूपात्मकत्वेन ऐक्यम् इति ज्ञापनाय एकवचनम्. एतेन स्वरूपस्यैव फलत्वम् उक्तं भवति इति मुख्यः सिद्धान्तः सूचितो भवति॥6॥

आसीनः सम्भवात्॥7॥

पूर्वसूत्रेण धर्ममात्रस्य फलत्वम् उक्त्वा, अधुना धर्मिणः फलत्वं तत्साधनं च आह सम्भवात्. उत्कटस्नेहात्मकसाधनस्य सम्भवात् तदधीनः सन् तदग्रम् आसीनो भगवान् भवति. एतेन भक्तवश्यता उक्ता॥7॥

एवं बहिःप्राकट्यम् उक्त्वा आन्तरं तद् आह

ध्यानाच्च॥8॥

भावनौत्कट्यदशायां व्यभिचारिभावात्मक-सततस्मृतिरूप-ध्यानादपि हृदि प्रकटः सन् आसीनो भवति इति अर्थः. तेन स्थैर्यम् उक्तं भवति॥8॥

एवं भक्तेच्छयैव स्वरूपप्राकट्यम् इति उक्त्वा लीलानाविष्करणम् आविष्करणं चापि तदिच्छयैव इति आह

अचलत्वं चापेक्ष्य॥9॥

भक्तेच्छाम् अपेक्ष्य अचलत्वं, 'च'कारात् चलत्वमपि इति अर्थः॥9॥

स्मरन्ति च॥10॥

केचन भक्ताः स्वरूपनिरपेक्षाः तत्स्मरणजनितानन्देनैव विस्मृतापव-र्गान्तफला भवन्ति. ‘च’कारात् श्रवणकीर्तनादयोऽपि समुच्चीयन्ते. तदुक्तम्

“अथ ह वाव तव महिमामृतसमुद्र-विप्रुषा-सकृल्लीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारित-दृष्टश्रुत-सुखलेशाभासाः परमभागवता” (भाग.पुरा.6।9।39) इति. अथवा “अहं भक्तपराधीनः”(भाग.पुरा.9।4। 63) इत्यादिस्मृतिः पूर्वोक्ते प्रमाणत्वेन उक्ता॥10॥

इति चतुर्थाध्याये प्रथमपादे तृतीयम् आदित्याद्यधिकरणम्॥3॥

## यत्रैकाग्रता तत्र अविशेषात्॥11॥ (4।1।4)

अथ इदं विचार्यते : बहिः आविर्भावो येभ्यो, येभ्यः च अन्तः तेषां तेषां च मिथः तारतम्यम् अस्ति न वा? इति. तत्र निर्णयम् आह. यत्र भक्तेषु एकाग्रता भगवत्स्वरूपे प्रकटएव एकस्मिन् ग्राहकचित्तधारा, नतु अन्तर्बहिः विज्ञानं, तत्र उभयोः अन्तःपश्यतो बहिःपश्यतः च भावे भगवत्स्वरूपे च विशेषाभावाद् न तारतम्यम् अस्ति इति अर्थः॥11॥

इति चतुर्थाध्याये प्रथमपादे चतुर्थं यत्रैकाग्रताधिकरणम्॥4॥

## आप्रायणात् तत्रापि हि दृष्टम्॥12॥ (4।1।5)

उक्ते अर्थएव अयं संशयः : अन्तःप्राकट्यवतो यदा बहिःसंवेदने सत्यपि पूर्वानुभूतभगवत्स्वरूपानुभवः तदा “पूर्वम् अन्तरम् अन्वभूवम्, अधुना बहिः अनुभवामि” इति अनुव्यवसायो भवति न वा? इति. तत्र वैलक्षण्याद् भवितुम् अर्हति इति पूर्वः पक्षः. तत्र सिद्धान्तम् आह आप्रायणाद् इति. श्रीभागवते, “प्रायणं हि सताम् अहम्” (भाग.पुरा.11।11।48) इति भगवद्वाक्यात् ‘प्रायण’शब्देन स्वतःपुरुषार्थत्वेन प्राप्यं परमं पारलौकिकं फलम् उच्यते. तथाच तन्मर्यादीकृत्य तस्य सैव अवस्था सार्वदिकी, नतु बहिःप्राकट्येऽपि बहिष्ट्वानुसन्धानम् इति अर्थः. ततः तस्य तत्र सायुज्यं भवति न वा? इति संशये निर्णयम् आह. तत्रापि प्रायणेऽपि प्राप्ते तस्य पूर्ववत् प्रभुणा समम् आलापावलोकन-श्रीचरणनलिन-स्पर्शादिकं दृष्टमेव फलं नतु अदृष्टं सायुज्यम् इति अर्थः. यतः शद्धपुष्टिमार्गे अङ्गीकृतः, अन्यथा पूर्वोक्तभावसम्पत्तिः कथं स्यात्? इति उपपत्तिः ‘हि’शब्देन सूच्यते. एतच्च “तद्भूतस्य तु नातद्भावः” (ब्रह्मसू.3।4।40) इति अत्र निरूपितम्॥12॥5॥

इति चतुर्थाध्याये प्रथमपादे पञ्चमम् आप्रायणाधिकरणम्॥5॥

तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ

## तद्व्यपदेशात्॥13॥ (4।1।6)

पुष्टिमार्गीयभक्तस्य फलं निरूप्य मर्यादामार्गीयस्य तस्य फलं चिन्त्यते. तत्रतु ज्ञानपूर्वकत्वं भक्तेः आवश्यकम्. कर्ममर्यादायापि स्वकृतत्वात् ताम् अनुल्लंघ्यैव भगवता फलं दीयते. तच्च, “नाभुक्तं क्षीयते” (ब्रह्मवै.पुरा.प्र. खण्ड.26।70) तद्भोगानुकूलकर्मणा

स्वसजातीयतत्सन्तानजननाद् अनिर्मोक्ष-एव सर्वस्य सम्पद्यते. नच प्रायश्चित्तवद् ज्ञानस्य कर्मनाशकत्वं वक्तुं शक्यम्. तद्वत् तस्य तदुद्शेन अविहितत्वात्. तथा कथने च अन्योन्याश्रयः. दुरितस्य चित्ताशुद्धिहेतुत्वेन तन्नाशे ज्ञानोदयो यतः. अतो मर्यादामार्गे मुक्तिः अनुकृतिविषया इति प्राप्ते, उच्यते. तदधिगमे ब्रह्मज्ञाने सति तज्ज्ञानस्वभावादेव उत्तराघस्य अश्लेषो असम्बन्धः, पूर्वस्य तस्य विनाशो भवति इति अर्थः. अत्र उत्तरस्य उत्पन्नस्य अश्लेषः इति न अर्थः, तस्य आत्मन्येव उत्पत्तेः तदतिरिक्तस्य श्लेषस्य अभावात्. अतो अनुत्पत्तिरेव अर्थः. नच एवं मर्यादा-मार्गीयत्वभङ्गः. साधनं विना स्वस्वरूपबलेनैव कार्यकारणे हि पुष्टिः. इह तु नियतकर्मविरोधित्वस्वभावेन ज्ञानेनैव तथासम्पत्तेः. अतएव, “तद्यथेषी-कातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते”(छान्दो.उप.5।24 ।3) इति श्रुतिः अग्निदृष्टान्तम् आह. स्मृतिरपि

“यथैधांसि समिद्धो अग्निः भस्मसात् कुरुतेऽर्जुन,
ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा”(भग.गीता4।37) इति.
“सर्वं पाप्मानं तरति” (बृहदा.उप.4।4।23),
“तरति ब्रह्महत्यां यो अश्वमेधेन यजते” (तैत्ति.संहि. 5।3।12)

इत्यादिश्रुतिभ्यः त्वायापि न तद्भोगनियमो वक्तुं शक्यः. एतेन अभुक्तस्य अक्षयाद् भोगे च कर्मान्तरजननाद् मोक्षासम्भवः इति निरस्तं वेदितव्यम्. न च अन्योन्याश्रयः. अनाद्यविद्याजनितसंसारवासनात्मिका हि सा. साच गुरूपसत्तिश्रवणमननविष्णूपासनादिरूपया ज्ञानसामग्रैव नाश्यते. अविद्या परं ज्ञानेन नाश्यतइति क्व तत्प्रसङ्गः? ज्ञानसामग्र्या बलिष्ठत्वात् कर्मणो दुर्बलत्वाद् न तत्प्रतिबन्धकत्वमिति ज्ञाननाश्यत्वबोधकश्रुतिस्मृतिमता त्वयापि उरीकार्यम्. इममेव हेतुम् आह आचार्यः तद्व्यपदेशाद् इति॥13॥

इतरस्यापि एवमसंश्लेषः पाते तु॥14॥

पापस्य शास्त्रविरोधित्वेन शास्त्रीयज्ञानेन समं विरोधो भवतु नाम. धर्मस्य अतथात्वेन अविरोधएव इति आशङ्कानिरासाय पूर्वन्यायातिदेशम् आह. इतरस्य पुण्यस्यापि एवं, पूर्वस्य नाशः उत्तरस्य अश्लेषः इति अर्थः. अतिदेशाद् हेतुरपि सएव ज्ञेयः. तथाहि. “उभे उ हैवैष एते तरति”(बृहदा.उप.4।4।22) “क्षीयन्ते च अस्य कर्माणि”(मुण्ड.उप.2।2।8) इति सामान्यवचनाद् “ज्ञानाग्निः सर्वकर्माणि”(भग.गीता 4। 37) इति स्मृतौ ‘सर्व’शब्दात् च तथा.

अथ इदं शङ्क्यते : मर्यादामार्गीयत्वाद् ज्ञानानन्तरं भरतवत् सङ्गदोषेण भगवद्भावात् च्युतौ सङ्गजदोषोत्पत्तिवद् अग्रे विहित-निषिद्धकर्मणोरपि उत्पत्तिः वक्तुं शक्येति ज्ञानस्य न सर्वात्मना कर्मविरोधित्वम् इति. तत्र निर्णयम् आह पाते. भक्तिमार्गे भगवद्भावात् च्युतिः पातः इति उच्यते. तुः अप्यर्थे. ‘अपि’शब्दे वाच्ये व्यवच्छेदार्थक‘तु’शब्दोक्त्या अस्मिन् मार्गे पातस्य व्यवच्छेदएव. “न कर्हिचिन् मत्परा”

(भाग.पुरा.3।25।38) इति वाक्यात्. परन्तु मर्यादामार्गीयत्वात् प्रारब्धभोगार्थं प्रभुश्चेत् तथा करोति, तद्भावे पूर्णे सति तद्भोगो सम्भावितइति तदा एवं भवति इति व्यासाभिप्रायो ज्ञायते.

तथाच तस्मिन् सत्यपि उत्तरस्य कर्मणो असंश्लेषएव इति अर्थः, पूर्वसूत्रे एवमेव 'अश्लेष'शब्दस्य व्युत्पत्तेः. अतिदेशस्य एवंपदेनैव प्राप्तेः सर्वं सूत्रं तत्परत्वेन न व्याख्येयम्. 'पात'शब्दस्य देहपातं 'तु'शब्दस्य अवधारणम् अर्थम् उक्त्वा देहपाते मुक्तेः आवश्यकत्वावधारणं वाक्यार्थः इति च उक्तिः न साधीयसी. मुक्तिप्रापकपदाभावाद् "भोगेन तु इतरे क्षपयित्वा अथ सम्पद्यते" (ब्रह्मसू.4।1।19) इति अग्रे वक्तव्यत्वात् च॥ 14॥

अनारब्धकार्येएव तु पूर्वे तदवधेः॥15॥

ननु देहस्य कर्मजन्यत्वात् तन्नाशे तन्नाशस्य आवश्यकत्वाद् ब्रह्मविदः प्रवचनानुपपत्तिः. एवं सति ब्रह्मजिज्ञासोः गुरूपसत्यादिसाधनासम्भवः. "आचार्यवान् पुरुषो वेद"(छान्दो.उप.6।14।2) इति श्रुतेः तदभावेन ज्ञान-मार्गोच्छेदेन मुक्त्युच्छेदप्रसङ्गः इति आशङ्क्य समाधत्ते. पूर्वे पूर्वसूत्राभ्यां ज्ञान-नाश्यत्वेन ये प्रोक्ते पापपुण्ये ते न अशेषे किन्तु अनारब्धं भोगायतनलक्षणं कार्यं याभ्यां तेएव इति अर्थः.

ननु इतरनिरपेक्षं हि ज्ञानं स्वशक्त्यैव अग्निः एधइव कर्माणि दहति इति पूर्वम् उक्तं, तथा सति अशेषमेव तद् दहति इति वक्तुं युक्तं, नतु सशेषम्. शक्तेः अविशिष्टत्वात्. नच कर्मनाशेऽपि संस्कारवशात् कुलालचक्रभ्रमिवत् तद्वासनावशाद् देहादिसत्तया प्रवचनाद्युपपत्तिः इति वाच्यम्. ज्ञानस्य सर्वतो बलवत्वात् सवासनस्य तस्य नाशनात्. नहि महाशिलानिपाते चक्रभ्रमिः अनुवर्तितुं शक्नोति इति आशङ्क्य आरब्धकार्यादहने हेतुम् आह. तदवधेः. तज्ज्ञानेन आरब्धकार्यादहनं यत् तद् अखिलकारणकारणत्वेन अखिलस्य पूर्वावधिरूपभगवदिच्छालक्षणाद् हेतोः इति अर्थः. यत्र तस्यापि दहनेच्छा तत्र तथैव इति निगूढाशयः. अतएव अग्रे तथा वक्ष्यते. अतएव श्रीभागवते "मृगदारकाभासेन स्वारब्धकर्मणा योगारम्भणतो विभ्रंशितः" (भाग.पुरा.5।8।26) इति, उपभोगेन "कर्मारब्धं व्यपनयन्" (भाग.पुरा. 5।10।14) इति च भरतं प्रति वचनं गीयते. एवं सति मणिमन्त्रादिप्रतिबद्धशक्तेः अग्नेरिव ज्ञानस्यापि अदाहकत्वे न काचिद् हानिः इति सर्वम् अनवद्यम्. इच्छाप्रतिबद्धता-दशायां न प्राचीना दशा अस्तीति तद्व्यवच्छेदज्ञापनाय 'तु'शब्दः. एतेन भगवद्भावस्य सर्वतो बलवत्त्वात् कथं तस्य पातः? इति शङ्का निरस्ता. भगवदिच्छायाः मूलकारणत्वेन उक्तेः तस्याः सर्वतो बलिष्ठत्वात्. तथा इच्छा च स्वकृतमर्यादापालनाय पुष्टौ अङ्गीकृते न तथा इति सर्वम् अनवद्यम्॥15॥

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्॥16॥

ननु प्रारब्धं हि प्राचीनं तन्नाशाय तद्भोगएव कर्तव्यो ब्रह्मविदा, नतु विहितम् अन्यदपि अग्निहोत्रादि, प्रयोजनाभावात्. दृश्यते च तादृशानां तत्करणम्, अतः उत्तरस्य

कर्मणः संश्लेषः आवश्यकः इति आशङ्क्य तत्प्रयोजनम् आह. 'तु'शब्दः शङ्काव्युदासकः. अग्निहोत्रादि विहितकर्मकरणं तत्कार्यायैव, भोगकार्याय प्रारब्धनाशायैव इति अर्थः. येषाम् अग्निहोत्रादिकारकं प्रारब्धम् अस्ति तैरेव तन्नाशाय भोगवत् तदपि क्रियते, नतु अतादृशैः, अतएव न सनकादीनां तथात्वम्. कुतः एतत्? तद्दर्शनात्. "यथाकारी यथाचारी तथा भवति साधुकारी साधुः भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन" (बृहदा.उप.4।4।5) इति श्रुतिः पूर्वकर्मणो अग्रिमकर्महेतुत्वं दर्शयतीति न अनुपपत्तिः काचित्.

केचित्तु "ज्ञानस्य यत् कार्यं तदेव अग्निहोत्रादेः" इति 'तत्कार्याय' इति पदस्य अर्थं वदन्ति. स न साधुः. "तदधिगमः" (ब्रह्मसू.4।1।13) इति उपक्रमाद् ब्रह्मविदः प्रारब्धात्मकप्रतिबन्धनाशे मोक्षस्य पूर्वज्ञानेनैव सम्पत्तेः कर्मणो वैयर्थ्यापातात्. "तमेतं वेदानुवचनेन" (बृहदा.उप.4।4।22) इत्यादि-श्रुतिदर्शनं 'दर्शन'पदार्थः इत्यपि पूर्वविरोधाद् उपेक्ष्यः॥16॥

॥इति षष्ठं चतुर्थाध्याये प्रथमपादे तदधिगमाधिकरणम्॥6॥

## अतो अन्यापि ह्येकेषाम् उभयोः॥17॥ (4।1।7)

तद् एवं पूर्वसूत्रचतुष्टयेन मर्यादामार्गीयभक्तस्य मर्यादयैव मुक्तिप्रतिबन्धसम्भवः तयैव तन्नाशश्च इति निरूपितम्. अथ पुष्टिमार्गीयस्य विनैव भोगं प्रारब्धं नश्यति न वा? इति विचार्यते. तत्र भोगैकनाश्यस्वभावत्वात् तस्य न तं विना अस्यापि तत् नश्यति इति प्राप्ते निर्णयम् आह. एकेषां पुष्टिमार्गीयाणां भक्तानाम् उभयोः प्रारब्धाप्रारब्धयोः भोगं विनैव नाशो भवति. कुतः एतत्? तत्र आह अतः. श्रुतेः कर्मणो ज्ञाननाश्यत्वनिरूपिकायाः. ब्रह्मविदएव प्रवचनादिनिरूपणेन तदनाश्यप्रारब्धाख्यकर्माक्षेपकश्रुतेश्च. अन्यापि श्रुतिः पठ्यते "तस्य पुत्रा दायम् उपयन्ति सुहृदः साधुकृत्यां, द्विषन्तः पापकृत्याम्" (शाट्या) इति. ज्ञान-भोगाभ्यां कर्मनाशनिरूपकश्रुत्या अस्याः श्रुतेः विरोधपरिहाराय अवश्यं विषयभेदो वाच्यः.

नच काम्यकर्मविषया इयं श्रुतिः इति वाच्यम्. "तदधिगम उत्तर-पूर्वाघयोरश्लेषविनाशौ"(ब्रह्मसू. 4।1। 13) इति सूत्रेण इतरस्यापि एवम् इति सूत्रावयवेन च अविशेषेण आरब्धातिरिक्तकर्मणोः अखिलयोः नाशनिरूपणात्, पापकृत्यायां काम्यत्वासम्भवाच्च. तस्माद् अत्यनुग्रहभाजनस्य भक्तस्य स्वप्राप्तिविलम्बम् असहिष्णुः भगवान् अस्य प्रारब्धम् एतत्सम्बन्धिगतं कृत्वा तस्य तेन भोगं कारयति. "प्रारब्धं भोगैकनाश्यम्" इति स्वकृतमर्यादापालनाय न नाशयति. नच तयोः अमूर्तत्वेन अकृताभ्यागमप्रसङ्गेन च न एवं वक्तुम् उचितम् इति वाच्यम्. ईश्वरत्वेन अन्यथापि करणसम्भवात्. मर्यादा-विपरीतस्वरूपत्वात् पुष्टिमार्गस्य न काचन अत्र अनुपपत्तिः भावनीया, तस्याः अत्र भूषणत्वात्. अतएव एकेषाम् इति दुर्लभाधिकारः सूचितः॥17॥

यदेव विद्ययेति हि॥18॥

ननु "यदेव विद्यया करोति" (छान्दो.उप.1।1।10) इति श्रुत्या विद्यापूर्वकं कर्मकरणे वीर्यातिशयः फलं श्रूयते. अतो ब्रह्मविद्यावतोऽपि तथात्वस्य उचितत्वाद् "उत्तरस्य अश्लेषः" इति यद् उक्तं तद् न उपपद्यते इति प्राप्ते, आह यदेव इति. हि यस्माद् हेतोः त्वया "यदेव विद्यया करोति श्रद्धया उपनिषदा" (पूर्ववद्) इति श्रुतिरेव ब्रह्मविदोऽपि कर्मोत्पत्तिप्रसञ्जिकात्वेन उदाहृता. सातु न तत्समर्थाः. तथाहि. "ॐइत्येतद् अक्षरम् उद्गीथम् उपासीत"(छान्दो.उप. 1।1।1) इत्युपक्रम्य तस्य रसतमत्वं मिथुनरूपत्वम् अनुज्ञाक्षरत्वं त्रयीप्रवृत्तिहेतुत्वं च निरूप्य, एतद् अग्रे "यदेव विद्यया" इत्यादि उक्त्वा, "इति खलु एतस्यैव अक्षरस्य उपव्याख्यानं भवति" इति उपसंहाराद् उद्गीथोपासनाविषयमेव 'यदेव विद्यया' इति वाक्यम् इति ज्ञायते. तेन उक्तरसतमत्वादिप्रकारकोपासनानां मध्ये "यदेव विद्यया करोति, तदेव वीर्यवत्तरं भवति" इति तदर्थः इति न ब्रह्मविद्या-गन्धोऽपीति न सा शङ्का अत्र सम्भवति इति अर्थः.

यद्वा. उक्ताशङ्कानिरासायैव आह यदेव इति. ब्रह्मविद् हि प्रारब्धक्षयायैव कर्म कुरुते, तत्तु अन्यकृतात् कर्मणः सकाशात् सवासनतन्नाशनाद् वीर्यवत्तरं भवत्येवेति न अनुपपत्तिः काचिद् इति अर्थः.

यद्वा. ननु पुष्टिमार्गीयस्य प्रारब्धस्यापि भोगं विनैव नाशः इति श्रुत्वा असम्भावनां कुर्वाणं प्रति कैमुतिकन्यायेन तत्परिहारम् आह यदेव इत्यादि. जीवनिष्ठा विद्या हि भगवज्ज्ञानशक्तेः अंशभूता. एवं सति यत्र धर्मसम्बन्धि-सम्बन्धाद् अन्येभ्यो अतिशयं कर्मणि वदति श्रुतिः, तत्र साक्षाद् धर्मिसम्बन्धे अतिशयितकार्यसम्पत्तौ कथम् असम्भावना कर्तुम् उचिता इति निगूढाशयः. अतएव हेतुवाची 'हि'शब्दः॥18॥

भोगेन त्वितरे क्षपयित्वा अथ सम्पद्यते॥19॥

पुष्टिमार्गीयफलप्राप्तौ प्रतिबन्धाभावं सोपपत्तिकम् उक्त्वा तत्प्राप्तिप्रकारम् आह. इतरे अग्रे प्राप्यालौकिकदेहाद् भिन्ने स्थूल-लिङ्गशरीरे क्षपयित्वा दूरीकृत्य, अथ भगवल्लीलोपयोगिदेहप्राप्त्यनन्तरं भोगेन सम्पद्यते. "सो अश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तैत्ति.उप.2।1) इति श्रुत्या उक्तेन भोगेन सम्पद्यते इति अर्थः. श्रुत्यर्थस्तु आनन्दमयाधिकरणे निरूपितः. अलौकिकत्वं विना उक्तदेहं विना च उक्तफलप्राप्तेः व्यवच्छेदकः 'तु'शब्दः॥19॥7॥

॥इति श्रीवेदव्यासमतवर्ति-श्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये
चतुर्थाध्यायस्य प्रथमः पादः॥

## *चतुर्थो अध्यायः द्वितीयः पादः*

पूर्वपादे लौकिकशरीरे क्षपयित्वा अलौकिकं तत् प्राप्य फलेन सम्पद्यते इति निरूपितम्. अथ अत्र इदं चिन्त्यते : भक्तस्य सूक्ष्मशरीरस्य क्षपणं नाम किं तत्स्वरूपनाशनम्, उत मणिस्पर्शाद् अयसश्च अमीकरत्वमिव तस्यैव अलौकिकत्वसम्पादनं भगवदनुग्रहाद् इति. तत्र उत्तरएव पक्षः साधीयान् इति भाति. तथाहि. यथा पूर्वं संसारिणएव जीवस्य तदनुग्रहात् पूर्वावस्थापगमो मुक्त्यवस्था च उच्यते, तथा अत्रापि वक्तुं उचितत्वात्. "न तस्मात् प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते"(बृहदा.उप.4।4।6) इति श्रुतिस्तु जीवस्य सायुज्यमुक्तिकाले तत्प्राणादीनामपि तथैव आह, अतएव अग्रे "ब्रह्मैव सन् ब्रह्म अप्येति" (बृहदा. उप.4।4।6) इति उच्यते. पुष्टिमार्गीयस्य उक्तमुक्त्यभावाद् न इयं तद्विषयिणी इति प्राप्ते प्रतिवदामः. ब्रह्मांशत्वेन जीवस्य आनन्दात्मकत्वाद् निर्दोषस्वरूपत्वाद् नित्यत्वाच्च दोषाणां च आगन्तुकत्वात् तदपगमे तस्य तथात्वम् उचितम्. प्राणादयस्तु न तादृशाइति तद्दृष्टान्तेन अत्रापि तथात्वं न वक्तुं शक्यम्. "देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्"(भाग.पुरा.7।1।34) इति श्रीभागवतवाक्यात् च. नच लौकिकत्वविशिष्टदेहादिः अत्र निषिध्यते इति वाच्यं, सामान्यनिषेधे बाधकाभावात्. नच तदनुभवएव बाधकः इति वाच्यम्. भगवतइव तदीयानामपि तेषां तथात्वे बाधकाभावात्.

ननु आगन्तुकत्वमेव बाधकम् इति चेद्, मैवम्. यथा व्यापिवैकुण्ठस्य अक्षरात्मकत्वेन अनागन्तुकत्वेन नैसर्गिकतद्ग्ताखिलवस्तुरूपत्वेन सामीप्यादिमुक्तिं प्राप्नुवतां भक्तानां देहेन्द्रियादिरूपमपि अनागन्तुकमेव वैकुण्ठप्राप्तिमात्रेण शुद्धजीवानां सम्पद्यते, तदीयत्वेन तत्फलति इति यावत्, तथा पुरुषोत्तमलीलायापि पुरुषोत्तमात्मकत्वात् तत्र अङ्गीकारमात्रेण प्राचीनाशेषप्रावाहिकधर्मनिवृत्तौ शुद्धजीवस्य पुरुषोत्तमलीलात्मकदेहादिरपि तदीयत्वेन सम्पद्यतइति न अनुपपन्नं किञ्चिद् इति अवहितो अवैहि.

अयमेव अर्थो वाजसनेयिशाखायाम् "अथ अकामयमानः" इत्युपक्रम्य, "आत्मकामः आप्तकामो भवति, न तस्मात् प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येति" (बृहदा.उप.6।4।6) इत्यन्तेन वाक्येन निगद्यते. अत्र 'प्राण'शब्देन प्राणाः सर्वेन्द्रियाणि च उच्यन्ते. 'आत्मकाम'शब्दे भगवद्वाचका'त्म'पदग्रहणेन भक्तस्य स्नेहातिशयजनितप्रभुदिदृक्षार्त्यतिशयः तादृशो येन मरणमेव सम्पद्येत, यदि प्रभुप्राकट्ये क्षणमपि विलम्बः स्यात्. अतो भगवत्प्राकट्येनैव आत्मस्थितिः इति ध्वन्यते. भक्तिमार्गे प्राकट्यस्यैव परमफलत्वेन तद्दर्शनेन आप्तकामो भवति. ततः साक्षाद् आश्लेषादिकामनायां प्राचीनदेहप्राणादेः तदयोग्यत्वात् ते तत्रैव1 लीना भवन्ति. बहिःप्रकटस्यैव अन्तरपि प्राकट्याद् उत्क्रमणाभावः उच्यते. आत्मातिरिक्तस्य गतिम् उक्त्वा तस्य ताम् आह "ब्रह्मैव सन् ब्रह्म अप्येति" इत्यनेन. उक्तरीत्या पुरुषोत्तमात्मकतल्लीलोपयोगिदेहेन्द्रियादिसम्पत्या 'ब्रह्मैव सन्', नतु ब्रह्मातिरिक्त-देहादिमानपि, तादृशः सन्, 'ब्रह्म' बृहत्वाद् 2बृंहणवत्वात् पुरुषोत्तमस्वरूपं प्राप्तो3 भवति इति अर्थः.

अन्यथा जीवस्य ब्रह्मांशत्वेन आन्दांशाविर्भावेन च ब्रह्मत्वे प्राणादिलयोक्त्या तदितरव्यवच्छेदे च अनुक्तसिद्धे सति 'ब्रह्मैव सन्' इति न वदेत्. अतएव एतदग्रे श्लोकोक्तिः "अथ मर्त्यो अमृतो भवति अत्र ब्रह्म समश्नुते" (बृहदा.उप.6।4।7) इति. मृतिधर्मवच्छरीरं हि मर्त्यं, तद्वत्त्वेन जीवोऽपि तथा उच्यते.

तथाच अयं पूर्वं तादृशएव, अथ पुष्टिलीलाप्रवेशानन्तरम् 'अमृत' उक्तरूपशरीरवान् भवति, ततो 'अत्र' अस्मिन्नेव शरीरे 'ब्रह्म' सम्यग् 'अश्नुते'. भगवता क्रियमाणलीलारसम् अनुभवति इति अर्थः.

भगवान् बादरायणः इमामेव श्रुतिं विषयीकृत्य तत्रोक्तप्राणानां लयः एकदैव, उत क्रमनियमो अस्ति? इति संशये निर्णयम् आह

## वाङ्मनसि दर्शनात् शब्दाच्च॥1॥ (4।2।1)

वाङ्मनसि इति. तत्र हेतुः दर्शनाद् इति. एतद् उक्तं भवति. भक्तेः स्नेहात्मकत्वात् तस्य प्रभुप्राकट्यफलकत्वात् तदौत्कट्ये तस्य आवश्यकत्वाद् "अयं मां पश्यतु" इति प्रभ्विच्छया तस्मिन् सम्पन्ने, चक्षुर्भ्यां मनसा च तद्रूपामृतम् अनुभवतः सः कोऽपि उत्कटो भावः समजनि, येन प्रभुणा सह सर्वेन्द्रियव्यापारकृतीच्छा समभूत्. तत्र तेषाम् असामर्थ्याद् भगवदानन्द-सम्बन्धिमनःसम्बन्धेन तं प्राप्स्यामइति तत्रैव सङ्गताः तेन आनन्देन सम्पन्नाः जाताः. अयमेव अर्थो अनेन सूत्रेण अग्रिमेण च "अतएव सर्वाण्यनु" (ब्रह्मसू. 4।2।2) इतिसूत्रेण निरूप्यते. दर्शनानन्तरम् आदौ सह सम्भाषणेच्छैव जन्यत इति, "वाङ्मनसि सम्पद्यते" (छान्दो.उप.8।8।6) इति छान्दोग्ये स्फुटोक्ते सम्मत्या च आदौ सैव उक्ता. एवं सति वाङ् मनसि सङ्गता सति भगवदानन्देन सम्पद्यते इति सूत्रार्थः सम्पद्यते. दर्शनाभावेऽपि वेण्वादिशब्दाद् अपि तथा सम्पद्यते इति हेत्वन्तरम् आह शब्दाच्च इति॥1॥

अतएव सर्वाण्यनु॥2॥

अतएव दर्शनात् शब्दाच्च हेतोः. सर्वाणि इन्द्रियाणि, अनु सान्निध्याद् वाचः पश्चात्. मनसि सङ्गतानि भगवदानन्देन सम्पद्यन्ते इति अर्थः. केचित्तु अत्र छान्दोग्यस्थं "वाङ् मनसि सम्पद्यते, मनः प्राणे, प्राणः तेजसि, तेजः परस्यां देवतायाम्" (छान्दो.उप.8।8।6) इति वाक्यं विषयत्वेन उक्त्वा, सूत्रे 'वाक्'-पदस्य तद्वृत्तिपरत्वं वदन्ति, सम्पत्तिं तन्नाशं च. तद् न साधीयः. तथाहि. 'वाक्'पदस्य वृत्तिपरत्वं चेत् श्रुत्यभिमतं स्यात् सूत्रकारः तदा तथैव वदेत्, नतु तत्सरूपमेव वाक्यम्, तन्निर्णयार्थमेव प्रवृत्तेः. मुख्यार्थत्यागो लक्षणापत्तिश्च. किञ्च, एवं 'मनसि' इति पदवैयर्थ्यं स्याद्, विषयवाक्योक्तक्रमत्यागानुपपत्तिश्च इति॥2॥

तन्मनः प्राण उत्तरात्॥3॥

पूर्वोक्तसर्वेन्द्रियवैशिष्ट्यवद् मनः प्राणे सम्पद्यते, नतु केवलम्. तत्र हेतुः उत्तराद् इति. "स यथा शकुनिः सूत्रेण प्रबद्धो दिशं-दिशं पतित्वा अन्यत्र आयतनम् अलब्ध्वा

बन्धनमेव उपश्रयते, एवमेव खलु सौम्य तन् मनो दिशं-दिशं पतित्वा अन्यत्र आयतनम् अलब्ध्वा प्राणमेव उपश्रयते" (छान्दो.उप.8।8।2) इति उक्त्वा, तत्र हेतुम् उत्तरेण वाक्येन आह "प्राणबन्धनं हि सौम्य मनः" (पूर्ववद्) इति. तस्माद् हेतोः तथा इति अर्थः॥3॥

सो अध्यक्षे तदुपगमादिभ्यः॥4॥

सर्वेन्द्रियविशिष्टमनोविशिष्टः प्राणो अध्यक्षे पुरो हृदि वा प्रकटे भगवति सम्पद्यते इति अर्थः. अत्र हेतुः उपगमादिभ्यः इति. उपगमो अभ्युपगमः पुष्टिमार्गे अङ्गीकारः इति यावत्. ततः तथा इति अर्थः. 'आदि'-पदाद् भगवद्वशीकरणसमर्थः स्नेहः प्रभ्वनिङ्गितार्थत्यागः तदनुरूपं भजनं च. अभ्युपगमे सिद्धे स्नेहादयो अवश्यं भवन्त्येव इति आशयेन, तदादित्वम् उक्तं, न उद्देशः कृतः. मर्यादामार्गे अङ्गीकृतानान्तु मुक्तिपर्यवसायित्वेन मुमुक्षुत्वाद् उत्कटस्नेहासम्भवेन प्रभुप्राकट्यासम्भवात् स्वस्वप्रकृतौ सङ्घातलये शुद्धजीवस्य भगवदनुग्रहेण श्रवणादिरूपया तथाविधस्नेहरूपया च भक्त्या मुक्तिः सम्पद्यतइति बह्वेव तारतम्यम् इति निगूढाशयेन इदम् उक्तम्. अभ्युपगमा-दयस्तु मुण्डकोपनिषत्सु पठ्यन्ते. "नायमात्मा"(मुण्ड.उप.3।2।4) इति उपक्रम्य "यमेवैष वृणुते तेन लभ्यः तस्यैष आत्मा वृणुते तनुं स्वाम्. नायमात्मा बलहीनेन लभ्यो नच प्रमादात् तपसो वाथ लिङ्गाद्, एतैः उपायैः यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम"(तत्रैव) इति॥4॥

॥इति चतुर्थाध्याये द्वितीयपादे प्रथमं वाङ्मनो अधिकरणम्॥1॥

उक्तं निगूढम् आशयं प्रकटयति

## भूतेषु तच्छ्रुतेः॥5॥ (4।2।2)

ननु मर्यादामार्गीयाणामपि एवमेव वागादिलयः उत अन्यथा? इति संशये निर्णयम् आह. तेषां ते भूतेषु लीयन्ते, नतु उक्तरीत्या भगवति. अत्र प्रमाणम् आह तच्छ्रुतेः.

"यत्र अस्य पुरुषस्य मृतस्य अग्निं वाग् अप्येति वातं प्राणः चक्षुः आदित्यं मनः चन्द्रं दिशः श्रोत्रं पृथिवीं शरीरम् आकाशम् आत्मा औषधीः लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयते" (बृहदा.उप.5।2।13) इतिश्रुतेः.

नच अविद्वद्विषयिणी इयं श्रुतिः इति वाच्यम्.

"याज्ञवल्क्येति होवाच यत्र अयं पुरुषो म्रियत उदस्मात् प्राणाः क्रामन्ति आहो नेतिनेति, होवाच याज्ञवल्क्यो अत्रैव समवनीयन्ते स उच्छ्र्यति आध्मायति अध्मातोमृतः शेते" (तत्रैव6।2।11) इतिपूर्ववाक्यात्. न हि अविदुषः प्राणानाम् अनुत्क्रमः. "तमुत्क्रामन्तं प्राणो अनूत्क्रामति"(तत्रैव6।4।2) इत्यादिश्रुतेः. ननु "यत्र अस्य पुरुषस्य" इति उपक्रम्य "रेतश्च निधीयते" (तत्रैव5।2।3) इत्यन्ता श्रुतिः अविद्वद्-विषयिणी इति मन्तव्यम्. यतः एतदग्रे "क्वायं तदा पुरुषो भवति" इति प्रश्ने याज्ञवल्क्यार्तभागाभ्यां विचारितम् उत्तरम् उच्यते. "तौ ह यदूचतुः कर्म हैव तदूचतुरथ ह यत् प्रशशंसतुः कर्म हैव तत् प्रशशंसतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" इति. एतेन कर्माश्रयः तिष्ठति इति निर्णयः सम्पद्यते. एवं

सति प्राणानुत्क्रमणोक्त्या सङ्घातलयोक्त्या च विद्वद्विषयत्वम् अत्र अवसीयते, यतः तस्यैव उक्तं द्वयं सम्भवति. अग्रिमश्रुत्युक्तकर्माश्रयत्वं च तस्मिन् विरुद्धम्, अतः पूर्वोत्तरविरोधाद् विषयानिश्चये प्राप्ते प्रतिवदामः. मर्यादामार्गीयविद्वद्विषयिण्येव इयं श्रुतिः इति. अतएव प्रश्ने "क्व तदा पुरुषो भवति" इति एतावतैव चारितार्थ्येऽपि साधारण-पुरुषव्यावृत्त्या मर्यादामार्गीयतत्प्रापकम् 'अयम्' इति पदम्. तस्यैव उपक्रान्तत्वात् तथा. अग्रिमविचारितो अर्थोऽपि तद्विषयकएव इति बुध्यस्व.

ननु उक्तं बाधकम् इति चेद्, हन्त श्रुतिशिरःसमाकलितम् आकलय. मर्यादामार्गेहि विधिप्राधान्यं, तथैव तन्निर्माणात्. तत्र हि "एवं कृतः एवं फलं दास्ये" नतु अकृतेऽपि इति भगवदिच्छा, अतः कर्म प्रधानम्.

एवं सति आर्तभागस्य अयम् आशयः : वागादिरेतोऽन्तलयेन प्रारब्ध-स्यापि तदा नाशात् शुद्धं जीवं विध्यविषयं कदाचित् पुष्टौ प्रवेशयति न वा? इति संशयेन तदा अयं क्व मर्यादामार्गेएव उत पुष्टावपि प्रवेशितो भवति? इति प्रश्नः. तदा अस्य अर्थस्य ईश्वरेच्छारीतिम् अविदुषो दुर्ज्ञेयत्वं जानन्तौ स्वयमेव यदवधारितवन्तौ तदपि रहस्यम् इति स्फुटम् अनुक्त्वा, श्रुतिः पर्यवसितम् अर्थम् उक्तवती "तौ ह"(बृहदा.उप.3।2।13) इत्यादिना. अत्र 'कर्म'पदं मर्यादामार्गपरम्. तथाच मर्यादामार्गएव तस्य स्थितिः इति अर्थः सम्पद्यते, मुक्तएव भवति इति यावत्. अतएव तत्प्रशंसापि. यतः ईश्वरत्वेन सर्वकरणसमर्थोऽपि तद्दाने तदपेक्षते. अत्र हेतुत्वेन मर्यादामार्गस्वरूपम् उक्तं "पुण्यो वा" (बृहदा.उप.3।2।13) इत्यादिना॥5॥

ननु मर्यादामार्गीयौ भक्तो ज्ञानी च भवतः, उक्तनिर्णयस्तु ज्ञानमार्गीयविषयएव, भक्तन्तु तादृशमपि कदाचित् पुष्टावपि प्रवेशयति इति आशङ्क्य तन्निर्णयम् आह.

नैकस्मिन् दर्शयतो हि॥6॥

एकस्मिन् ज्ञानिनि भक्ते वा मर्यादानियमो न, किन्तु उभयोरपि. तत्र हेतुः दर्शयति इति. यतो याज्ञवल्क्यार्तभागौ ज्ञानिभक्तसाधारण्येन मर्यादानियमं दर्शयतः उक्तरीत्या, "तौ ह" इत्यादिना. अन्यथा प्राक् कृताङ्गीकृतिः अन्यथा भवेद् इति उपपत्तिः 'हि'शब्देन सूच्यते. पूर्वोक्तपूर्वोत्तरश्रुतिविरोधपरिहारा-न्यथानुपपत्तिः अत्र मूलम् इति ज्ञेयम्.

केचित्तु उपसंहृतेषु वागादिषु शरीरान्तरप्रेप्सासामयिको जीवः "क्व अयं तदा पुरुषः?" इति प्रश्नविषयः इति वदन्ति. तद् न साधीयः. "तम् उत्क्रामन्तं प्राणो अनूत्क्रामति प्राणम् अनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" (बृहदा.उप.4।4।2) इतिश्रुतिः भाविदेहान्तरजीवस्य प्राणानाम् इन्द्रियाणां च सहैव उत्क्रमणं वदतीति वागादिलयस्य तत्र असम्भवाद् न उक्तस्य प्रश्नविषयत्वं वक्तुं शक्यम्. पूर्ववाक्ये "अत्रैव समवनीयन्ते" इति उक्तत्वाच्च. अतो अस्मदुक्तएव मार्गो अनुसर्तव्यः. एतेन "नायं परविद्यावान् यतः,

अमृतत्वमेव तत्फलम्” इति तच्च देशान्तरानायत्तमिति उत्क्रमणापेक्षा कर्माश्रयत्वं च न स्यात् किन्तु अपरविद्यावान्. तस्यास्तु ब्रह्मलोकावधिः फलमिति कर्माश्रय-त्वोत्क्रमणादिकं सम्भवति इत्यपि निरस्तं वेदितव्यम्॥6॥

॥इति चतुर्थाध्याये द्वितीयपादे द्वितीयं भूताधिकरणम्॥2॥

## समाना चासृत्युपक्रमाद् अमृतत्वं च अनुपोष्य॥7॥ (4।2।3)

मर्यादापुष्ट्योः न कदाचिद् अन्यथाभावः इति यद् उक्तं, तत्र हेत्वपेक्षायां वस्तुस्वरूपमेव तथा इति बोधयितुम् आह समाना इत्यादि. अत्र अयम् आशयः : साधनक्रमेण मोचनेच्छा हि मर्यादामार्गीया मर्यादा, विहितसाधनं विनैव मोचनेच्छा पुष्टिमार्गमर्यादा. तथा सति सदा एकरूपत्वं तयोः युक्तम् इति. एतदेव आह सृतिः संसृतिः. जीवानां स्वस्मात् पृथक्कृतानाम् अविद्यया अहन्ता-ममतास्पदीकरणम्. तदुपक्रमः आरम्भः तं मर्यादीकृत्य मुक्तिपर्यन्तम् उक्तरूपा मर्यादा समाना सदैकरूपा, मध्ये न अन्यथा भवति इति अर्थः. एवमेव अनुपोष्य व्रतम् अकृत्वा, अमृतत्वम्अपि पुष्टिमार्गे समानम् इति अर्थः. अत्र ‘उपोषण’पदम् अशेषमुक्तिसाधनोपलक्षकम्॥7॥

एवं प्रासङ्गिकम् उक्त्वा प्रकृतं परामृश्यते. “सोऽध्यक्षः” (ब्रह्मसू. 4। 3।4) इति सूत्रेण पुष्टिमार्गीय-भक्तसङ्घातस्य भगवत्येव लयः इति उक्तम्. अग्रिमेण तेन मर्यादामार्गीयभक्तसङ्घातस्य भूतेषु लयम् उक्त्वा, प्रश्नानन्तरं शुद्धजीवस्य तस्य मुक्तिरेव भवति इति वक्तव्ये सति, “आहर सौम्य हस्तम्” (बृहदा.उप.5।2।13) इत्यादिना स्वाशयम् अन्येषु अप्रकटयन्तौ कर्म यद् निरूपितवन्तौ तत् कुतः? इति आशङ्क्य तयोः आशयं निगूढं प्रकटयति.

तदापीतेः संसारव्यपदेशात्॥8॥

तदा नित्यलीलान्तःपातलक्षणपुष्टिमार्गीयमुक्तिदशायां मर्यादामार्गीयायाः अपीतेः मुक्तेः संसारत्वाभावेऽपि पुरुषोत्तमभजनानन्दानुभवाभावात् संसार इत्येव पुष्टिमार्गे व्यपदेशो यतः क्रियते, अतः तदभिसन्धाय तया रीत्या निरूपणम्. अतएव श्रीभागवते श्रीशिववचनं गीयते. “नारायणपराः सर्वे न कुतश्चन बिभ्यति, स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः”(भाग.पुरा.6।7। 28) इति. श्रीभगवद्गीतास्वपि “देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि”(भग.गीता7।23) इति वाक्येन मर्यादामार्गीयभक्तमुक्तेः इतरसाधा-रण्यम् उच्यते॥8॥

ननु संसारवद् मुक्तेरपि हेयत्वं, यत्र तादृशं चेत् पुष्टिमार्गीयं तत्त्वं, तदा मुक्तेः पुरुषार्थत्वबोधिकायाः श्रुतेः प्रतारकत्वम् आपतति इति तद्बोधक-प्रमाणानां तत्स्तुतिमात्रपरत्वमेव इति प्राप्ते आह

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः॥9॥

पुष्टिमार्गीयं तत्त्वं सूक्ष्मं दुर्ज्ञेयम् इति अर्थः. अत्र अयम् आशयः : पुष्टिमर्यादामपि अतिक्रम्य पुष्टिपुष्टौ प्रवेशे तत् तत्त्वम् अनुभवविषयो भवति, न अन्यथा. तत्र प्रवेशस्तु अतिदुरापो अतिशयितानुग्रहेतरासाध्यत्वाद्, अतः उक्तेतराज्ञेयमेव तद् भवति. तेषान्तु मुक्तिरेव फलम्, तस्याएव इष्टत्वात्. रागिणां स्वर्गादिवत्. इष्टफलाप्राप्तौ हि प्रतारकत्वम्, अन्यथा प्रवृत्तिमार्गीय-फलबोधिकायापि श्रुतेः प्रतारकत्वं स्यात्. इच्छा च अधिकारानुसारिणीति न अनुपपन्नं किञ्चिद् इति.

ननु एवंविधार्थास्तित्वे किं मानम्? इति आकाङ्क्षायाम् आह प्रमाणतः इत्यादि. प्रमाणं श्रुतिः. सातु "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह, आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चनेति" (तैत्ति.उप.2।9), "एतं ह वाव न तपति किम् अहं साधु नाकरवं किम् अहं पापम् अकरवम्"(तत्रैव)इति. अत्र पूर्वार्धेन दुर्ज्ञेयत्वम्, उत्तरार्धेन तत्सत्ता च बोध्यते. अन्यथा मनसोऽपि अप्राप्यस्य वेदनकथनं विरुद्धं स्याद्, अतो दुर्ज्ञेयत्वेनैव धर्मिग्राहकमानसिद्धं तद् इति अर्थः. 'च'कारात् तादृशानाम् अनुभवः परिगृह्यते ॥9॥

तर्हि ब्रह्मविदामिव तादृशानां भक्तानामपि स्वमार्गोपदेशनं क्वचित् श्रूयेत. नच एवम्, अतः पूर्वोक्तं न साधीयः इति भातीति उत्सूत्रम् आशङ्क्य तत्र हेतुम् आह

नोपमर्देन अतः॥10॥

उपदेशनं तदा स्याद् यदि ब्रह्मविदामिव तेषां स्वास्थ्यं स्यात्. यतः तेषां विरहिदशा प्रियसङ्गमदशा च इति दशाद्वयमेव भवति, न अन्या. पूर्वस्याः तस्यास्तु अतिदुःसहत्वेन सर्वेषां भावानाम् उपमर्देन तिरोधानेन उपदेशो न भवति इति अर्थः. सङ्गमेतु, अतः, पुरःप्रकटपरमानन्दस्वरूपाद् भगवतएव हेतोः उपदेशो अन्यस्मै न भवति इति अर्थः. न हि भगवदग्रे सः सम्भवति इति भावः ॥10॥

ननु "रसो वै सः. रसं ह्येव अयं लब्ध्वा आनन्दी भवति"(तैत्ति.उप.2। 7) इत्युपक्रम्य "एष ह्येव आनन्दयाति"(तत्रैव) इतिश्रुतेः उक्तरूपानन्द-प्राप्तौ दुःसहविरहतापो अशक्यवचनः, आनन्दतिरोधानएव तत्सम्भवात्. तद्हेतोः असम्भवात्, सम्भवेतु तत्प्राप्तिरेव न स्याद् इति प्राप्ते, उत्तरं पठति.

अस्यैव च उपपत्तेः ऊष्मा॥11॥

आनन्दात्मकरसात्मकस्य अस्यैव भगवतएव धर्मः ऊष्मा विरहतापः इति अर्थः. विरोधपरिहाराय आह उपपत्तेः इति.

इदम् उक्तं भवति : भगवद्विरहस्य सर्वसाधारणत्वेऽपि स्थायि-भावात्मक-रसरूपभगवत्प्रादुर्भावो यस्य हृदि भवति, तस्यैव तदप्राप्तिजः तापः, तदनन्तरं नियमतः तत्प्राप्तिश्च भवति, नतु अतथाभूतस्येति अन्वयव्य-तिरेकाभ्याम् उक्तरसस्यैव एषः धर्मः इति निश्चीयते. तस्य वस्तुनएव तथात्वात् सः तापोऽपि रसात्मकएव.

प्रतिषेधाद् इति चेद्, न, शारीरात्॥12॥

ननु "न पश्यो मृत्युं पश्यति न रोगं नोत दुःखम्" (छान्दो.उप. 9।26। 2) इतिश्रुत्या दुःखप्रतिषेधः तादृशे भक्ते क्रियतइति तस्य दुःखित्वं न वक्तुं शक्यम् इति आशङ्क्य प्रतिषेधति न इति. कुतः? शारीरात्. शरीरसम्बन्धिनो हेतोः यद् दुःखं कर्मजनितम् इति यावत्, तस्यैव श्रुतौ प्रतिषेधात् न अत्र अनुपपत्तिः इति अर्थः. एतेन दुःखत्वेन कर्मजन्यत्वानुमान-मपि निरस्तं वेदितव्यम्, लौकिकएव दुःखे तज्जन्यत्वनियमात्॥12॥

स्पष्टो हि एकेषाम्॥13॥

एकेषां शाखिनां भगवत्स्वरूपलाभानन्तरं दुःख-तन्निवर्तनलक्षणो अर्थः स्पष्टः पठ्यते. तथाहि. "रसो वै सः, रसं ह्येव अयं लब्ध्वा आनन्दीभवति. को ह्येव आन्यात्, कः प्राण्यात्, यदेष आकाश आनन्दो न स्याद्. एष ह्येव आनन्दयाति" (तैत्ति.उप.7।2).

अत्र रसात्मकभगवत्स्वरूपलाभे सति आनन्दवत्त्वम् उक्त्वा, तस्यैव जीवनहेतुत्वं परमानन्दहेतुत्वं च उच्यते. मरणहेतुः उपस्थित्यभावे जीवनहेतुत्वं न वदेत्. सः रसस्तु संयोग-विप्रयोग-भावाभ्यामेव पूर्णो भवति अनुभूतः, न एकतरेण. तत्र विरहतापस्य अत्युपमर्दित्वेन तदा प्राणस्थितिरपि न स्यात्, यदि रसात्मको भगवान् हृदि न स्याद् इति आशयेन आह 'को ह्येव अन्याद्' इति. 'यद्' यदि 'एषः' हृदि स्फुरद्रूपः 'आकाशो' भगवान् 'न स्यात्', कः तदा 'अन्याद्', "अन प्राणने" को वा जीवयेद्, न कोऽपि इति अर्थः. तादृशस्य भगवत्स्वरूपातिरिक्ताद् न जीवनम् इति ज्ञापनाय सामान्यपदम्. ब्रह्मानन्दा-धिकपूर्णानन्दविरहासन्नमरणनिवारणासामर्थ्यम् अतादृशस्य उचितमेव इति ज्ञापनाय 'हि'शब्दः. तादृशस्य जीवनसम्पादनं प्रभोः आवश्यकम् इति ज्ञापनाय 'एव'कारः. तापात्मकस्यापि आनन्दात्मकत्वमेव इति ज्ञापनाय 'आनन्द'पदम्. तदा प्रलापगुणगानादयो ये भवन्ति, तेऽपि तद्धर्माएव. नीलाम्बुद-श्यामो अतिक्लेशवशाद् "हृदयाद् अपगच्छतु" इति भावेऽपि "हृदयाद् न अपसारयितुं शक्यः" इति ज्ञापनाय च आकाशत्वम् उक्तम्. तदनन्तरं प्रकटीभूय, तदन्यः को वा प्रकर्षेण दर्शनस्पर्शाश्लेषभाषणादिभिः स्वरूपानन्ददानेन अन्यात्, पूर्वतापनिवृत्तिपूर्वकम् आनन्दपूर्णं कुर्याद् इति अर्थः. "रसं ह्येव अयं लब्ध्वा आनन्दी भवति" इति पूर्ववाक्येनैव अन्यव्यवच्छेदपूर्वकं भगवत्प्राप्तेः आनन्द-हेतुत्वप्राप्तावपि यत् पुनः आह तत्रापि व्यतिरेकमुखेन, तत्रापि जीवनहेतुत्वं, तदपि सामान्यविशेषाभ्यां वारद्वयं, तेन विरहसामयिकोक्तरूपएव अर्थः श्रुतेः अभिप्रेतः इति निश्चीयते. अन्यथा मरणहेत्वनुपस्थितौ जीवनहेतुत्वं न वदेद् इति उक्तम्. तदवस्थापन्नः को वा पुरुषो जीवेद्? इति वा अर्थः॥13॥

स्मर्यते च॥14॥

भगवद्भावस्य मरणहेतुत्वं, तेनैव च जीवनं तस्य ब्रह्मादिदुरापत्वं च श्रीभागवते स्मर्यते.

"ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः,
ये त्यक्तलोकधर्माश्च मदर्थे तान् बिभर्म्यहम्"

(भाग.पुरा 10।43।4) इत्युपक्रम्य,
"धारयन्ति अतिकृच्छ्रेण प्रायः प्राणान् कथञ्चन"
(भाग.पुरा 10।43।6) इत्यादि श्रीप्रभुवचनम्, श्रीमदुद्धववचनं च
"एताः परं तनुभृतो भुवि गोपवध्वो, गोविन्दएव निखिलात्मनि रूढभावाः,
वाञ्छन्ति यं भवभियो मुनयो वयं च, किं ब्रह्मजन्मभिः अनन्तकथारसस्य"
(भाग.पुरा 10।44।58) इत्यादि.

तेन भगवतएव जीवनहेतुत्वं भावस्य च परमपुरुषार्थत्वं दुरापत्वं च स्फुटम् अवगम्यते॥14॥

तानि परे तथा ह्याह॥15॥

ननु हृदि बहिश्च रसात्मकभगवत्प्राकट्यं, तददर्शनजनितो विरहभावः, तज्जनितः तापः, तेन मरणोपस्थितिः, तन्निवर्तनं तदौत्कट्यं, तदा प्राकट्यं, ततः पूर्णस्वरूपानन्ददानादिकं लोके क्वचिदपि न दृष्टं श्रुतं वा वैकुण्ठेऽपि इति कुतः? इति आशङ्कायाम् आह तानि उक्तानि वस्तूनि परे प्रकृति-कालाद्यतीते वैकुण्ठादपि उत्कृष्टे श्रीगोकुलएव सन्ति इति शेषः. तत्र प्रमाणम् आह तथाहि आह श्रुतिः. ऋग्वेदे पठ्यते

"ता वां वास्तूनि उश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः,
अत्र आह तद् उरुगायस्य वृष्णः परमं पदम् अवभाति भूरिः"
(ऋग्वेद 2।2।24).

ता तानि वां भगवत्-तदन्तरङ्गभक्तयोः सम्बन्धीनि वास्तूनि वस्तूनि गमध्यै प्राप्तुम् उश्मसि कामयामहे. तानि कानि? इति आकांक्षायां गूढाभिसन्धिम् उद्घाटयति. यत्र श्रीगोकुले गावो भूरिशृङ्गा बहुशृङ्गा रुरुप्रभृतयो मृगाश्च वसन्ति इति शेषः. अयासः शुभावहाः. तद् उक्तगुण-विशिष्टम् उरु गीयते इति उरुगायः तस्य. गोप्यो हि सततं तं गायन्ति. अतएव तदादिभक्तेषु कामान् वर्षति इति वृषा. तस्य परमं प्रकृतिकालाद्यतीतं पदं स्थानं भगवतो वैकुण्ठं भवति. तत्र एतादृशलीलाभावेन तस्मादपि परमम् उत्कृष्टम्. अत्र भूमौ अवभाति प्रकाशते इति अर्थः. तथापि स्वदृग्गोचरो न भवतीति खेदेन अह इति आह श्रुतिः. उरु गीयते परं सर्वत्र कामवर्षणं भक्तेषु अत्रैव इति तात्पर्येण वा विशेषणद्वयम् उक्तम्. यमुनापुलिनतदुपवननिकुञ्जगह्वरप्रदेशाद्रिसान्वाद्यात्मकत्वेन भूरि बहुरूपम्. तथाच एतादृशं यत् परमं पदम् अवभाति तत्सम्बन्धीनि वास्तूनि कामयामहे इति वाक्यार्थः सम्पद्यते. 'ते पदार्थाः' इति वक्तव्ये सति तानि इति उक्तिः या सा विषयवाक्यानुरोधाद् इति ज्ञेयम्. पुरुषोत्तमसम्बन्ध्यर्थानां तत्प्राकट्यस्थानएव प्राकट्यं युक्तम् इति हिशब्देन आह॥15॥

## अविभागो वचनात्॥16॥ (4।2।4)

ननु लीलायाः नित्यत्वेन तन्मध्यपातिनां तद्दर्शनं यथा नित्यं, तथा तादृक्साधनाभावेऽपि निजानुकम्पया कदाचित् कमपि भक्तं तत्र नयति चेत् तदा कञ्चित् कालं स्थापयित्वा, ततः तं वियोजयति न वा? इति संशयः. तोषस्य कादाचित्कत्वात् तत्साध्या तत्र स्थितिरपि तथैव इति वियोजयति इति पूर्वः पक्षः. तत्र सिद्धान्तम् आह. तत्र प्रवेशितस्य तस्माद् अविभागएव. कुतः? वचनात्. तैत्तिरीयके उक्तर्गनन्तरमेव "विष्णोः कर्माणि पश्यत" (तैत्ति.संहि. 1।3।6) इति ऋचा तत्र कृतानि कर्माणि उक्त्वा, तदग्रे वदति "तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः"(तत्रैव) इति. पुरुषोत्तमस्वरूपवित्त्वं सूरित्वम्. तच्च भक्त्यैवेति सूरयो भक्ताएव. तेषां सदा दर्शनम् उच्यते. अन्यथा लीलानित्यत्वेनैव पूर्वगर्भ्यां तत्रस्थितगवादीनां प्रभुकर्मविषयाणां च भक्तानां सदा तद्दर्शनस्य प्राप्तत्वाद् इदं न वदेत्. तस्माद् अविभागएव. एतेनापि लीलानित्यत्वं सिध्यति. एतद् यथा-तथा विद्वन्मण्डने प्रपञ्चितम्॥16॥

इति चतुर्थाध्याये द्वितीयपादे चतुर्थम् अविभागाधिकरणम्॥4॥

एवं पुष्टिमार्गीयभक्तवृत्तान्तम् उक्त्वा ज्ञानमार्गीयस्य तम् आह.

तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनु-स्मृति-योगाच्च

## हार्दानुगृहीतः शताधिकया॥17॥ (4।2।5)

पूर्वं, "भूतेषु तच्छ्रुतेः" इत्यादिना मर्यादामार्गीयस्य वागादिलयः उक्तः. अधुना तस्य जीवात्मनः उत्क्रमणप्रकारः उच्यते. "स एताः तेजोमात्राः समभ्याददानो हृदयमेव अन्ववक्रामति"(बृहदा.उप.6।4।1) इति श्रुतेः तस्य आत्मनः ओक आयतनं हृदयं तदग्रं पूर्वं प्रज्वलति, पूर्वं तथा अप्रकाशमानमपि तदा प्रकाशते इति यावत्. तदा तत्प्रकाशितं द्वारं निर्गमनमार्गो यस्य तादृशः उत्क्रामति. यतः श्रुतिः तथा आह "तस्य हैतस्य हृदयस्य अग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नोवा"(छान्दो.उप.6।4।2) इत्यादि. यद्यपि एतावत् सर्वजीवसाधारणं तथापि विद्वांस्तु न इतरवद् इतरनाड्या निष्क्रामति, किन्तु, शताधिकया एकशततम्या नाड्या मूर्धन्या निष्क्रामति. "शतं चैका हृदयस्य नाड्यः तासां मूर्धानम् अभिनिःसृतैका, तया ऊर्ध्वम् आयन् अमृतत्त्वम् एति विष्वङ्ङन्या उत्क्रमणे भवन्ति"(छान्दो.उप. 10।66) इति यतः श्रुतिः आह. अत्र हेतुम् आह हार्दानुगृहीतः इति. हेत्वन्तर्गर्भं विशेषणम्. "गुहां प्रविष्टौ परमे परार्धे" (कठोप.3।1) इति श्रुतेः हृदयाकाश-सम्बन्धी यः परमात्मा तदनुग्रहात् तथैव भवति इति अर्थः. अनुग्रहे हेतुः विद्यासामर्थ्याद् इति. तस्याः विद्यायाः शेषभूताङ्गभूता या गतिः प्रव्रजनरूपा, तच्छेषभूतैव या भगवत्स्मृतिपरम्परा च ताभ्यां च यो भगवदनुग्रहः तेन तथा इति अर्थः॥17॥

इति चतुर्थाध्याये द्वितीयपादे पञ्चमं तदोकोधिकरणम्॥5॥

रश्म्यनुसारी॥18॥

"अथ या एता हृदयस्य नाड्यः ताः पिङ्गलस्य अणिम्नः तिष्ठन्ति, शुक्लस्य नीलस्य पीतस्य लोहितस्य इति असौ वा आदित्यः पिङ्गलः" (छान्दो. उप.8।6।1) इत्युपक्रम्य अग्रे पठ्यते "तमभित आसीना आहुः जानासि मां जानासी माम् इति स यावद् अस्मात् शरीराद् अनुत्क्रान्तो भवति तावज् जानादि अथ यत्र एतद् अस्मात् शरीराद् उत्क्रामति अथ एतैरेव रश्मिभिः ऊर्ध्वम् आक्रमते" (छान्दो.उप.8।6।4) इति.

अत्र 'तमभित' इत्याद्युक्तेः सर्वसाधारण्युत्क्रान्तिः प्राप्यते. पूर्वम् आदित्यत्वेन उक्तस्य पिङ्गलस्य रश्मिभिः ऊर्ध्वाक्रमणं च तथा. अत्र संशयः ओकोग्रज्वलनादेः इतरसाधारण्येऽपि यथा हार्दानुग्रहाद् विलक्षणा गतिः विदुषः उक्ता, तथा रश्म्यनुसारित्वमपि इतरसाधारणम्, उत अस्मिन्नेव? इति. तत्र अवधारणम् आह रश्म्यनुसारी निष्क्रामति अयमेव इति॥18॥

इति चतुर्थाध्याये द्वितीयपादे षष्ठं रश्म्यधिकरणम्॥6॥

निशि न इति चेद्, न,

## सम्बन्धस्य यावद्देहभावित्वाद् दर्शयति च॥19॥ (4।2।7)

विदुषः उत्क्रमणे हार्दानुग्रहकृतो यथा विशेषः, तथा कालविशेषकृतो-ऽपि विशेषो भविष्यति? इति आशङ्क्य तन्निरासम् आह. तत्र अहोरात्रकृतो अयनकृतो वा सः भवेत्. तत्र आद्यकृतो नास्ति इति आह न इति. तत्र हेतुः सम्बन्धस्य इत्यादिः. अनुग्रहहेतुभूतो यः पूर्वोक्तो गत्यनुस्मृतिः सम्बन्धः तस्य यावद्देहभावित्वात् तत्कार्यस्य अनुग्रहस्यापि तथात्वात् कालस्य अप्रयोजकत्वम् इति अर्थः. अत्र प्रमाणम् आह दर्शयति यतः श्रुतिः. "तमेव विदित्वा मुनिः भवति एतमेव प्रव्राजिनो लोकम् ईप्सन्तः प्रव्रजन्ति"(बृहदा.उप.6।4।22) इति ॥19॥

हार्दानुग्रहस्य मुक्तिहेतोः विद्यमानत्वाद् अयनविशेषोऽपि अप्रयोजकः इति आह.

अतश्चायनेपि दक्षिणे॥20॥

स्पष्टार्थम् इदम्॥20॥

ननु "यत्र काले तु अनावृत्तिम्" (भग.गीता8।22) इति काल-प्राधान्येन उपक्रम्य "अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणं, तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना" (तत्रैव8।25) इतिभगवद्वाक्याद् ब्रह्मविदोऽपि उक्तकालापेक्षा अस्ति इति आशङ्क्य विषयभेदेन समाधत्ते.

योगिनः प्रति स्मर्यते स्मार्ते चैते॥21॥

ज्ञानमार्गाद् योगमार्गोहि भिन्नः. तथाच योगिनम् उद्दिश्यैव कालविशेषस्य गतिविशेषहेतुत्वं स्मर्यते, नतु ज्ञानमार्गीयस्य श्रौतस्य, इतरनिरपेक्षत्वात्. नच योग-साङ्ख्येऽपि श्रौतेएव इति वाच्यम्. यतः स्मार्ते एते. चो हेत्वर्थे. एते योगसांख्ये

"अग्निर्ज्योतिः" (भग.गीता 8।24) "धूमो रात्रिः" (भग.गीता 8।25) इति वाक्यद्वयोक्तगती वा. इदन्तु श्रुत्युक्त-देवयान-पितृयानातिरिक्तमार्गम् अभिप्रेत्य समाहितम्. तेएव चेद् अत्रापि उच्येते शब्दभेदेन, तदा न विरोधः॥21॥

इति चतुर्थाध्याये द्वितीयपादे सप्तमम् अतोन्याधिकरणम्॥7॥
इति श्रीवेदव्यासमतवर्ति-श्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः॥

## *चतुर्थो अध्यायः तृतीयः पादः*

### अर्चिरादिना तत्प्रथितेः॥1॥ (4।3।1)

ननु ज्ञानमार्गीयस्येव मर्यादामार्गीयभक्तस्यापि अर्चिरादिमार्गेणैव गमनम् उत सद्योमुक्तिरेव भवति? इति संशयः. तत्र यथा ज्ञानिनो नियमाभावः तथा अत्रापि इति प्राप्ते आह.

अर्चिरादिमार्गेण तस्य ज्ञानमार्गीयस्यैव उत्कर्षकथनात् सएव तेन मार्गेण गच्छति, नतु भक्तोऽपि इति अर्थः. तथाहि. पञ्चाग्निविद्याप्रकरणे "तद् य इत्थं विदुः ये च इमे अरण्ये श्रद्धा तप इति उपासते ते अर्चिषम् अभिसम्भवन्ति अर्चिषो अहर् अह्नः आपूर्यमाणपक्षम्" (छान्दो.उप. 7।10।1) इत्यत्र उपक्रमे भक्तातिरिक्तानेव अधिकृत्य तथा गतिः उच्यते. स्मृतावपि "अग्निर्ज्योतिरहः शुक्लः" (भग.गीता 8।24) इत्यत्र "ब्रह्मविदो जनाः" (तत्रैव) इतिवचनेन ज्ञानमार्गीयस्यैव सः पन्थाः उच्यते.

अथ इदं चिन्त्यते : सामोपनिषत्सु पठ्यते "अथ या एता हृदयस्य नाड्यः ताः पिङ्गलस्य अणिम्नः तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्य इति असौ वा आदित्यः पिङ्गलः"(छान्दो.उप.10।6।1) इत्युपक्रम्य आदित्यरूपस्य पिङ्गलस्य रश्मिरूपत्वं नाडीनाम् उक्त्वा, अग्रे वदति "अथ यत्र एतद् अस्मात् शरीराद् उत्क्रामति अथ एतैरेव रश्मिभिः ऊर्ध्व आक्रमते"(छान्दो.उप.9।6।1) इति नाडी-रश्मिसम्बन्धेन एका परलोकगतिः श्रूयते अर्चिरादिका च अन्या, "ते अर्चिषम् अभिसम्भवन्ति अचिर्षो अहः"(छान्दो.उप.5।10।1) इत्यादि श्रुत्युक्ता. "स एनं देवयानं पन्थानम् आपद्य अग्निलोकम् आगच्छति"(कौषी. उप.1।3) इति च अपरा. "स यदा वै पुरुषो अस्माद् लोकात् प्रैति स वायुम् आगच्छति"(बृहदा.उप.5।1) इति च इतरा.

"सूर्यद्वारेण ते विरजाः प्रयान्ति" (मुण्ड. उप.1।2।11) इति च अन्या. एवम् अनेकेषु मार्गेषु सत्सु अर्चिरादेरेव उक्तिः कुतः इति. तत्र सर्वेषां पारिभाषिकम् अर्चिरादित्वम्, अतएव "अथ एतयोः पथोर्न कतरेण च न" (छान्दो.उप.5।10।8) इति मार्गद्वय-भ्रष्टानाम् अतिकष्टं "जायस्व म्रियस्वेति तृतीयं स्थानम्" (छान्दो. उप. 5।10।8) इत्युक्तम्, अन्यथा अनेकेषां मार्गाणाम् उक्तानां श्रूयमाणत्वाद् अस्य तृतीयत्वं न उच्येत.

अतः प्रकरणभेदाद् भिन्नोपासनशेषत्वाद् मिथो अनपेक्षा भिन्नाएव एते मार्गाः ब्रह्मप्रापकाः इति मन्तव्यम् इति चेद्, तत्र उच्यते.

न हि इयं परिभाषा सर्वेषु श्रुता अस्ति, यतः तथा उच्येत. अतो लाघवाद् अनेकपर्वविशिष्टः एकएव मार्गः इति मन्तव्यं, नतु पर्वभेदेन मार्गभेदः इति, गौरवप्रसङ्गात्. नच एवम् "अथ एतैरेव रश्मिभिः" इति अवधारणा-नुपपत्तिः इति वाच्यम्. तस्याः श्रुतेः उत्क्रमणमात्रमार्गनिरूपकत्वात्. तथाहि. तत्र उपक्रमे हि "अथ यत्र एतद् अस्मात् शरीराद् उत्क्रामति अथ एतैरेव रश्मिभिः ऊर्ध्व आक्रमते"(छान्दो.उप.10।6।5) इति उच्यते. एतस्मात् पुरस्ताद् "अथ या एता हृदयस्य नाड्यः"(छान्दो.उप.10।6।1) इत्युपक्रम्य पिङ्गलस्य आदित्यत्वम् उक्त्वा,

"तद् यथा महापथ आतत उभौ ग्रामौ गच्छति इमं च अमुं च एवमेव एता आदित्यस्य रश्मय उभौ लोकौ गच्छन्ति इमं च अमुं च अमुष्माद् आदित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते ते अमुष्मिन् आदित्ये सृप्ता" (छान्दो.उप.10।6।2)

इत्यन्तेन वाक्येन नाडीषु रश्मिप्रचारम् उक्त्वा, अग्रे "अथ यत्र एतद् अस्माद्" (छान्दो.उप.10।6।5) इत्याद्युक्तम्. उपसंहारे च

"शतं चैका हृदयस्य नाड्यः तासां मूर्धानम् अभिनिः-सृतैका तया ऊर्ध्वम् आयन् अमृतत्त्वम एति विष्वङ्ङन्या उत्क्रमणे भवन्ति" (छान्दो.उप.10।6।6) इति.

एवम् उपक्रमोपसंहाराभ्याम् उत्क्रमणमात्रमार्गनिरूपकत्वं, नतु ब्रह्म-प्रापकमार्गस्य, अतः तदनुपपत्तिपरिहारो अनर्थकः.

ननु अनेकपर्वविशिष्टत्वेन मार्गस्य एकत्वे तं निरूपयन्ती श्रुतिः क्वचित् किञ्चित् पर्व निरूपयति, क्वचिद् न इति कथम्? उपसंहारेण प्राप्स्यन्ते इति तात्पर्येण तथा इति चेद्, ब्रवीषि, तदा शाखान्तरम् अविदुषः तदसम्भवेन तं प्रति श्रुते न्यूनतापातः. न हि सर्वशाखाविदं प्रत्येव कथनम् इति वक्तुम् उचितम्, तस्य असम्भवात्. अतः स्वस्वशाखाज्ञानवन्तं प्रत्येव तथा, अध्ययनविधेरपि तावन्मात्रपरत्वात्. शाखान्तरसंवादिपर्वकथनानुपपत्तिश्च. उपसंहारेणैव तस्यापि प्राप्तिसम्भवात्. अतो विरुद्धदिक्कानां स्व-स्वमार्गेण एकग्रामप्राप्तिवद् इहापि भवितुम् अर्हति. स्वातन्त्र्येण सर्वैः मार्गैः ब्रह्मप्राप्तिः. नच एवम् "अथ एतयोः पथोः"(छान्दो.उप.7।10।8) इति द्विवचनानुपपत्तिः, "जायस्व म्रियस्व" (छान्दो.उप.7।10।8) इत्यस्य तृतीयत्वं च अनुपपन्नम् इति वाच्यम्. अर्चिरादिकम् उक्त्वा उपसंहरति "एषः देवयानः पन्था" (छान्दो.उप. 7।10। 2) इति. श्रुत्यन्तरे च, "स एनं देवयानं पन्थानम् आपद्य अग्निलोकम् आगच्छति" (कौषी.1।3) इति. तथाच ब्रह्मप्रापकाः सर्वे मार्गाः देवयाना इति उच्यन्ते. "दैवी सम्पद् विमोक्षाय" (भग.गीता 16।5) इति भगवद्वाक्याद् दैव्यां सम्पदि ये जाताः, ते देवाः

इति उच्यन्ते. तेषां यानं गमनं यत्र इति ते सर्वेऽपि मार्गाः 'देवयान'शब्देन उच्यन्ते. द्वितीयस्तु अविशिष्टः. एवं द्वित्वं
त्रित्वं च उपपद्यते. नच उक्तरीत्या लाघवाद् एकएव सः मन्तव्यः. स्वतःप्रमाणभूता हि श्रुतिः. सा येन यदा या श्रुता, तदर्थावधारणे द्वितीयस्याः अनुपस्थितत्वाद् न लाघवगौरवतद्विचारावसरः. क्वचिद् उपस्थितौ च उक्तबाधकैः उपसंहारानवकाशः.

अपरञ्च. ब्रह्मविदः क्रममुक्तौ गन्तव्यो मार्गोहि अयम् उपदिश्येत. तत्तल्लोके तदानन्दानुभवश्च आवश्यकः. तथाच उपासनभेदात् फलभेदस्य आवश्यकत्वात् मार्गभेदोऽपि तथेति सर्वेषु एकरूपफलप्रसञ्जकः उपसंहारो न युक्तः. किञ्च, उपासने कर्मणि च उपसंहारः सम्मतः. मार्गस्तु न अन्यतररूपः, अतो यस्य उपासकस्य येन मार्गेण गमनं, सः मार्गः उपदिश्यतइति न उपसंहारो युक्तः. अविधेयत्वादपि तथा. एतद् यथा-तथा पुरस्ताद् निरूपितम् "उपसंहारो अर्थाभेदाद् विधिशेषवत् समाने च" (ब्रह्मसू.3।3।5) इत्यत्र. एवं सति 'अर्चिः'शब्देन अर्चिरुपलक्षितो मार्गः उच्यते. 'आदि'पदेन अन्ये सर्वे मार्गाः संगृह्यन्तइति न अनुपपत्तिः काचिद् इति चेत्, अत्र वदामः. 'अर्चिरादिभ्यः' इति उक्तं भवेत्, त्वद्रीतिरेव चेद् अभिप्रेता भवेत्, तस्माद् न एवम् इति अवधार्यते. अर्चिरादिना इति एकवचनान्यथानुपपत्या मार्गस्य एकत्वम् अवश्यम् ऊरीकार्यम्. एवं सति श्रुतिषु यावन्ति पर्वाणि उक्तानि तानि सर्वाणि एकस्मिन्नेव अर्चिरादिमार्गे वर्तमानान्यपि यस्य उपासकस्य यावत् पर्वभोगो भावी, तं प्रति तावत् पर्वोक्तिः, यस्य यावतां तेषां सः न भावी तं प्रति न तदुक्तिः, तद्भोगा-भावादिति न अनुपपन्नं किञ्चित्. ननु त्वयापि अनुक्तानां पर्वणां तत्र स्थितिं वदतोपसंहारएव उक्तो भवति प्रापकत्वेन इति चेत्, स्याद् एतद् एवं, यदि तस्यैव गन्तुः भोगाय तदपि पर्वः तत्र उच्येत, नतु एवं, किन्तु एकवचनानुरोधाद् मार्गैक्ये निश्चिते यं प्रति यत् पर्व उच्यते, तत् तत्र कण्ठोक्तमेवेति न उपसंहारापेक्षा. अग्रे अन्यत्र उक्तानां पर्वणाम् उक्तस्थले सन्निवेशोक्त्यापि सूत्रकाराभिमतः एकएव मार्गः इति ज्ञायते. श्रुतौ सर्वत्र पूर्वपरामर्शादपि तथा॥1॥

वायुम् अब्दाद् अविशेषविशेषाभ्याम्॥2॥

छान्दोग्ये वायुः न पठ्यते. कौशीतकिश्रुतौतु

"स एतं देवयानं पन्थानम् आपद्य अग्निलोकम् आगच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" (कौशी.उप.1।3)

इति वाय्वादयः श्रूयन्ते. तत्र अर्चिषो अग्नेश्च अभेदाद् न विचारणीयम् अस्ति. वायुलोकं कस्माद् लोकाद् गच्छति? इति आकाङ्क्षायाम् आह वायुम् अब्दाद् इति.

"अर्चिषो अहः अह्न आपूर्यमाणपक्षम् आपूर्यमाण-पक्षाद् यान् षड्डुदङ्ङेति मासांन् तान् मासेभ्यः संवत्सरं संवत्सराद् आदित्यम्" (छान्दो.उप.4।15।5)

इति अत्र संवत्सरलोकात् परस्ताद् वायुलोको निवेशयितव्यः. तथाच संवत्सरलोकाद् वायुलोकं गच्छति इति अर्थः. तत्र विनिगमकम् आह अविशेष-विशेषाभ्याम्

इति. अत्र इदं ज्ञेयम् : अग्निहोत्रादिकर्मभिः चित्तशुद्धौ उपासनाभिः ज्ञानोदये क्रममुक्त्यधिकारी हि तत्तल्लोकं गत्वा भुक्त्वा अन्ते ब्रह्म प्राप्नोति. कर्मतु अग्निसाध्यं भूलोकएव च भवति. अतः आदौ तत्रत्यो भोगः, ततः तदुपरितनलोकानाम्. "पृथिवी दीक्षा तया अग्निदीक्षया दीक्षितः"(तैत्ति. ब्राह्म.3।7।7). "यथा पृथिवी अग्निगर्भः"(आप.कल्प.1।13।5) इत्यादि-श्रुतिभ्यो भूः अग्निप्रधाना भवति. अतो अर्चिराख्यम् अग्निलोकम् आदौ गच्छति. ततः कर्मोपासनयोः अहरादिसंवत्सरान्ते काले विहितत्वात् तत्र-तत्र गत्वा भुङ्क्ते. तथाच संवत्सरान्तानां भूसम्बन्धित्वेन अविशेषात् तन्मध्ये वायोः न प्रवेशः. भूलोकाद् उपरि अन्तरिक्षलोकः तदुपरि द्युलोकः, तथाच "वायुर-न्तरिक्षस्य अधिपतिः"(तैत्ति.संहि.3।4।5) इति श्रुतेः, "सूर्यो दिवो अधिपतिः"(तत्रैव) इति श्रुतेः तयोः पौर्वापर्ये विशेषो हेतुः अस्तीति आदित्यलोकात् पूर्वम् उक्तरीत्या भूलोकमध्यपातिसंवत्सरस्य परस्तात् च वायुः निवेशयितव्यः इति अर्थः.

ननु "ते अर्चिषम् अभिसम्भवन्ति अर्चिषो अहः" (छान्दो.उप.7।10।1) इत्यादिश्रुतिः उक्तम्-उक्तम् अनूद्य-अनूद्य अपादानत्वं वदन्ती पूर्वोत्तरयोः अव्यवधानं सूचयतीति न उक्तम् आदरणीयम् इति चेत्, सत्यम्. यस्य उपासकस्य न वायुलोकभोगः तं प्रति सा उक्तिः. यस्यतु तद्भोगः, तस्य उक्तरीतिः मार्गैक्यादिति न अनुपपत्तिः काचित्.

केचित्तु, "स एनं देवयानं पन्थानम् आपद्य अग्निलोकम् आगच्छति, स वायुलोकं स वरुणलोकम्" (पूर्ववद्) इति अविशेषेण वायुः उपदिश्यते, मिथःपौर्वापर्यप्रापकपदाभावात्.

"यदा वै पुरुषो अस्माद् लोकात् प्रैति स वायुम् आगच्छति. तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्वम् आक्रमते सः आदित्यम् आगच्छति"(बृहदा.उप.5।10।1)

इति श्रुत्या आदित्यात् पूर्वो वायुः विशेषेण उपदिश्यतइति अब्दादि-त्ययोः अन्तराले निवेशयितव्यः इति अर्थं वदन्ति. सः चिन्त्यते. यथा "तेन स ऊर्ध्व आक्रमते स आदित्यम् आगच्छति"(छान्दो.उप.10।6।5) इति विशेषो-पदेशः इति उच्यते, तथा "सः वरुणलोकम्" इत्यत्रापि वक्तुं शक्यम्. नच,

"स आदित्यम् आगच्छति" इत्यत्र 'तत्'शब्दस्य पूर्वपरामर्शित्वाद् वायुलोक-गतस्यैव पूर्वत्वात् तथा इति वाच्यम्. "अग्निलोकम् आगच्छति स वायुलोकं स वरुणलोकम्"(कौषी.उप.1।3) इत्यत्रापि तुल्यत्वात्. किञ्च, एवम् अग्नि-लोकानन्तरं वायुलोकः इत्यपि वक्तुं शक्यम्. अतो विद्वद्भिः उपेक्ष्यो अयम्. वाजसनेयिनस्तु, "मासेभ्यो देवलोकं देवलोकाद् आदित्यम्"(बृहदा.उप. 8।2।15) इति पठन्ति. तत्रापि आदित्यात् पूर्वो देवलोकात् परो वायुः ज्ञेयः. एकत्र आदित्यात् पूर्वत्वे सिद्धे मार्गैक्याद् अन्यत्रापि तथात्वस्य न्यायप्राप्तत्वात्. सूत्रकारेणतु छन्दोगश्रुत्यपेक्षया उक्तं "वायुम् अब्दाद्" इति. एवं सति मासेभ्यः परस्ताद् अब्दनिविशनं कार्यम्.

नच "वायुम् अब्दाद्" इति सूत्रान् मार्गभेदापत्तिः. देवलोकस्य आदित्याधिष्ठेयत्वेन आदित्यमध्यपातित्वम् अभिप्रेत्य छन्दोगश्रुतिः तथा उक्तवती. तदनुसारेण व्यासोऽपि अतो न अनुपपत्तिः॥2॥

तडितोऽधि वरुणः सम्बन्धात्॥3॥

"आदित्यात् चन्द्रमसं चन्द्रमसो विद्युतम्"(छान्दो.उप.6।15।5) इत्यत्र-पठित-विद्युल्लोकात् परतो वरुणलोको निवेशनीयः. तत्र हेतुः सम्बन्धात्. तडितो अप्सम्बन्धित्वाद् वरुणस्य तत्पतित्वात् तथा॥3॥

वरुणाच्चाधीन्द्रप्रजापती॥4॥

स्पष्टम् इदम्. अर्चिरादिपाठे विद्युदनन्तरं "तत्पुरुषो अमानवः स एतान् ब्रह्म गमयति"(छान्दो.उप.6।15।5) इति पठ्यते. तत्तु यस्य उपासकस्य वरुणादिलोकगमनापेक्षा नास्ति, तम् अपेक्ष्य इति ज्ञेयम्. मार्गैक्यनिमयमम् अभिप्रेत्य सूत्रकारो अन्यत्र उक्तानाम् अन्येषामपि लोकानां तत्रैव निवेशनम् आह॥4॥

इति चतुर्थाध्याये तृतीयपादे प्रथमम् अर्चिराद्यधिकरणम्॥1॥

## आतिवाहिकाः तल्लिङ्गात्॥5॥ (4।3।2)

विद्युदनन्तरं "तत्पुरुषो अमानवः सः एतान् ब्रह्म गमयति" (छान्दो. उप.6।15।5) इत्यत्र भवति संशयः. उक्तश्रुतेः गमयित्रैव ब्रह्मप्राप्तिः इति निश्चीयते. सच विद्युदनन्तरमेव पठ्यते. एवं सति यस्य वरुणादिलोकगमनं, तस्य वचनाभावेन गमयित्रप्राप्तेः ब्रह्मप्राप्तिः भवति, नवा? इति. तत्र वाचनि-कस्य यावद्वचनत्वात् तदभावेन सा न भवति इति प्राप्ते आह आतिवाहिकाः इति. एतद् उक्तं भवति. यस्य उपासकस्य यावत् फलभोगानन्तरं ब्रह्मप्राप्तिः भाविनी, तस्य तावत् तद्भोगानन्तरं ब्रह्मप्राप्तिः भवति. अतएव कौशीतकि-श्रुतौ प्रजापतिलोकानन्तरं ब्रह्मलोकः पठ्यते. अन्यथा कृतसाधनवैयर्थ्यं, तेषां ब्रह्मप्राप्तिसाधनत्वबोधकश्रुतिविरोधश्च स्यात्. तथाच यत्र आतिवाहिकश्रुतिः नास्ति, तत्रापि आतिवाहिको भगवदीयएव ब्रह्म प्रापयति इति ज्ञेयम्. वस्तुतस्तु बहवएव तादृशाः सन्ति इति ज्ञापनाय बहुवचनम् अत्र उक्तम्. तन्मध्ये कश्चन आगत्य एकएव नयति इति ज्ञापनाय श्रुतौ एकवचनम्. तत्र हेतुः तल्लिङ्गात्. "तत्पुरुषो अमानवः" (छान्दो.उप.6।15।5) इत्यत्र ब्रह्मसम्बन्धित्वं लिङ्गम् उच्यते. तेन इदं ज्ञाप्यते. यथा विद्याबलात् तत्तल्लोकप्राप्तिः, तथैव ब्रह्मप्राप्तिरपि इति न, किन्तु भगवदीयपुरुषानुग्रहेणैव इति.

नच पूर्व-पूर्वलोकाधिष्ठातृदेवा उत्तरोत्तरलोकं प्रति आतिवाहिकाः यथा, तथा ब्रह्मप्राप्त्यव्यवहितपूर्वलोकदेवाएव ब्रह्मप्रापकाइति 'तत्'पदेन सः लोकएव उच्यते इति वाच्यम्. तदेतरलोकेषु तदकथनं यथा, तथा अत्रापि न कथयेत्. लोकाधिष्ठातृदेवानाम् आतिवाहिकत्वोक्तौ अर्चिर्लोकप्रापकाति-वाहिकस्य अभावात् तत्प्राप्तिः न स्यात्. तथा सति देवयानमार्गएव उच्छिद्येत. अतो यथा विद्याबलेनैव अर्चिषः प्राप्तिः तथा इतरेषामपि

इति बुध्यस्व. कस्यचिद् अल्पलोकगत्यनन्तरमेव ब्रह्मप्राप्तिः. कस्यचिद् बहुलोकगत्यनन्तरं सः उच्यतइति भोगभूमित्वमेव तेषाम् अगवगन्तव्यम्. सर्वेषां सर्वत्र गमने देवयानं पन्थानं वदन्त्याः श्रुतेः सामि तत्कथनम् अनुपपन्नं स्यात्. अतः उपासनाभेदेन फलभेदं ज्ञापयन्ती तथावदति इति युक्तम् उत्पश्यामः॥5॥

ननु "तेषाम् इह न पुनरावृत्तिरस्ति"(बृहदा.उप.8।2।15) इत्यादिश्रुतिभ्यो देवयानं पन्थानं प्राप्तानां पुंसां ब्रह्मवित्त्वम् अवश्यं वाच्यम्. तेन सद्योमुक्तौ सम्भवत्यां सत्यां क्षयिष्णुत्वेन क्षुद्रानन्दत्वेन च हेयानां परमफल-प्राप्तिविलम्बहेतूनाम् अर्चिरादिलोकानां कामना कुतः यतः तद्धेतुभूतोपासनाः सम्भवन्ति. किञ्च. "अर्चिरादिना तत्प्रथितेः"(ब्रह्मसू.4।3।1) इत्यत्र यद् उक्तं ज्ञानमार्गीयस्यैव अर्चिरादिप्राप्तिः, न भक्तिमार्गीयस्य इति, तदपि अनुप-पन्नम्. "यत् कर्मभिर् यत् तपसा ज्ञानवैराग्यतश्च यत्"(भाग.पुरा. 11। 21।32) इत्युपक्रम्य, "सर्वं मद्भक्तियोगेन मद्भक्तो लभते अञ्जसा, स्वर्गापवर्गं मद्धाम कथञ्चिद् यदि वाञ्छति"(तत्रैव) इतिभगवद्वाक्याद् भक्तस्यापि एतद्वाञ्छाफले सम्भवतः, अन्यथा प्रभुः न वदेत्. एवं सति भक्तिसुखं हित्वा अन्यत्र कामनायां हेतुः वाच्यः इति आकाङ्क्षायां तम् आह.

उभयव्यामोहात् तत्सिद्धेः॥6॥

अत्र इदं ज्ञेयम् : देवयानः पन्थापि भगवतैव सृष्टो अस्ति. तथाच उक्तहेतुभिः तत्र कस्यापि कामाभावे तत्सृष्टिः व्यर्था स्याद्, अतो भगवानेव कांश्च व्यामोहयति ज्ञानिनो मर्यादामार्गीयभक्तांश्च, अतः तत्कामनासिद्धेः तत्फलभोगः इति. यत्तु अर्चिरादिमार्गगन्तॄणां देहवियोगेन सम्पिण्डित-करणग्रामत्वेन अस्वातन्त्र्यं व्यामोहः. अर्चिरादीनां च अचेतनत्वेन अस्वातन्त्र्यं व्यामोहः कार्यकरणासामर्थ्यम् इति यावत्. तेन अर्चिराद्यधिष्ठातृदेवैः अतिवाह्यन्ते इति सिद्धम् इति व्याख्यानम्. तद् न साधीयः, 'व्यामोह'शब्दस्य अन्यथाज्ञानवाचकत्वेन असामर्थ्यावाचकत्वात्. तथा सति अर्चिर्लोकमपि न प्राप्नुयात्. प्रापकाभावाद् इति उक्तम्॥6॥

ननु विद्युतो वरुणादिलोकप्राप्त्यनन्तरं यस्य ब्रह्मप्राप्तिः तस्य तल्लोकसम्बन्धी ब्रह्मप्रापकः पुरुषो अस्ति उत सः स्वतएव तत्प्राप्नोति? इति संशये उत्तरं पठति.

वैद्युतेनैव ततः तच्छ्रुतेः॥7॥

न हि ब्रह्मप्राप्तिः विद्युल्लोकसम्बन्धिपुरुषसामर्थ्येन उच्यते किन्तु ब्रह्मसम्बन्धितत्सामर्थ्येन. तथाच यतएव लोकात् तत्प्राप्तिः ततो ब्रह्मसम्बन्धि-पुरुषादेव. एवं सति विद्युल्लोकात् तत्प्राप्तौ यो ब्रह्मसम्बन्धी पुरुषः प्रापकः उक्तः तेनैव ततो वरुणादिलोकेभ्योऽपि ब्रह्मप्राप्तिः. तत्र हेतुम् आह तच्छ्रुतेः. "तान् वैद्युतात् पुरुषो मानसः एत्य ब्रह्मलोकान् गमयति" (बृहदा.उप. 8।2। 15) इति श्रुतेः. अत्र 'एत्य' इति वचनाद् यतएव लोकाद् ब्रह्मप्राप्तिः भवित्री तत्रैव आगत्य ब्रह्म प्रापयति इति गम्यते. श्रुतौ(बृहदा.उप.8।2।15) वैद्युतं लोकम् आगत्य तस्माद् ब्रह्मलोकान् गमयति इति

उक्तमिति सः पुरुषो वैद्युतः इति उच्यते, नतु तल्लोकवासित्वेन. तथा सति 'एत्य' इति न वदेत्, ततएव ब्रह्मप्रापणे. अतएव 'मानस' इति उक्तः. यदैव भगवन् मनसि भवति "अथ एनं मां प्रापयतु" इति तदैव प्रापयति इति तथा.

छान्दोग्येतु (छान्दो.उप.6।15।5) 'अमानवः' इति पठ्यते. तच्च अलौकिकत्वं, तदपि उक्तरूपमेवेति न कश्चिद् विशेषः. वाजसनेयके "ब्रह्मलोकान् गमयति" (बृहदा.उप.8।2।15) इति पठ्यते. छान्दोग्ये तु 'ब्रह्म' इति. तत्र अयं भावः : भक्तन्तु वैकुण्ठलोकं नयति, ते बहुविधा इति 'ब्रह्मलोकान्' इति उक्तम्. ज्ञानमार्गीयन्तु अक्षरं ब्रह्म प्रापयति इति 'ब्रह्म' इति उक्तम्. अतएव उभयव्यामोहः उक्तः आचार्येण॥7॥

इति चतुर्थाध्याये तृतीयपादे द्वितीयम् आतिवाहिकाधिकरणम्॥2॥

अत्र सिद्धान्तदाढर्यार्थम् उक्तम् अर्थं हस्तपिहितमिव कृत्वा बादरिमतं पूर्वपक्षत्वेन आह

## कार्यं बादरिरस्य गत्युपपत्तेः॥8॥ (4।3।3)

"स एतान् ब्रह्म गमयति"(छान्दो.उप.6।15।4) इत्यत्र 'ब्रह्म'पदेन अविकृतं परमेव ब्रह्म उच्यते, उत कार्यरूपो ब्रह्मलोकः? इति भवति संशयः. परस्य व्यापकत्वेन देशविशेषगमयित्रोः अनपेक्षितयोः उक्तेः कार्यरूपएव सः 'ब्रह्म'पदेन उच्यते इति बादरिः आचार्यो मन्यते. कुतः? अस्य गत्युपपत्तेः. तस्य परिच्छिन्नत्वेन तत्स्थितिदेशं प्रति अस्य गन्तुः गतेः उपपत्तेः इति अर्थः ॥8॥

विशेषितत्वाच्च॥9॥

"ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति" (बृहदा.उप.8।2।16) इति श्रुतौ बहुत्वेन वासाधिकरणत्वेन च विशेषिताः लोकाः. गन्तारश्च दूरदेशगत्या विशेषिताइति न परं ब्रह्म तत्, किन्तु कार्यमेव इति अर्थः. 'लोक'पदं तज्जन्यभोगपरम्. तेन तस्य एकत्वेऽपि विविधभोग-ज्ञापनाय बहुवचनं घटते॥9॥

तत्र 'ब्रह्म'शब्दप्रयोगे हेतुम् आह.

सामीप्यात्तु तद्व्यपदेशः॥10॥

तल्लोकस्थितानां न अन्यलोकव्यवधानं परप्राप्तौ, किन्तु ततएव इति परब्रह्मसामीप्याद् ब्रह्मत्वेन व्यपदेशः कृतः. 'तु'शब्दस्तु वस्तुतो ब्रह्मत्वं व्यवच्छिनत्ति॥10॥

ननु "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोर्जुन" (भग.गीता 8।16) इति वाक्यात् ततः पुनरावर्तते. अत्र "तेषाम् इह न पुनरावृत्तिरस्ति" (बृहदा. उप.8।2।16) इति पठ्यतइति परमेव अत्र 'ब्रह्म'शब्देन उच्यते इति प्राप्ते, उत्तरं पठति.

कार्यात्यये तदध्यक्षेण सह अतः परमभिधानात्॥11॥

कल्पसमाप्तौ कार्यस्य ब्रह्मलोकस्य नाशे सति तदध्यक्षेण चतुर्मुखेन ब्रह्मणा सह अतो ब्रह्मणः सकाशात् परम् ईश्वरं प्राप्नोति अतो अपुनरावृत्तिश्रुतिः न विरुध्यते. अत्र

प्रमाणम् आह अभिधानाद् इति. श्रुतौ तथाभिधानाद् इति अर्थः. सा तु "वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद् यतयः शुद्धसत्त्वाः ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे" (महाना.उप.12।3) इति. 'परान्तकाले' इत्यत्र 'पर'शब्देन ब्रह्मणः पूर्णम् आयुः उच्यते ॥11॥

उक्ते अर्थे श्रुतिं प्रमाणत्वेन उक्त्वा स्मृतिमपि आह.

स्मृतेश्च॥12॥

"ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे, परस्यान्ते कृतात्मान प्रविशन्ति परं पदम्" (कूर्म.पूरा.92।269) इति स्मृत्यापि सएव अर्थः प्रतिपाद्यते॥12॥

अत्र सिद्धान्तम् आह.

परं जैमिनिर्मुख्यत्वात्॥13॥

"स एतान् ब्रह्म गमयति" इति अत्र 'ब्रह्म'पदेन परमेव ब्रह्म उच्यते इति जैमिनिः आचार्यो मनुते. कुतः? मुख्यत्वात्. बृहत्वादिधर्मविशिष्टं हि 'ब्रह्म'पदेन उच्यते. तादृक् परमेव ब्रह्म भवतीति मुख्या वृत्तिः 'ब्रह्म'पदस्य परस्मिन्नेव, अन्यत्र गौणी. तथाच मुख्य-गौणयोः मध्ये मुख्यस्यैव बलिष्ठत्वात् तथा॥13॥

दर्शनाच्च॥14॥

"स एतं देवयानं पन्थानम् आपद्य अग्निलोकम् आगच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम्" (कौशी.उप.1।3) इति कौशीतकिश्रुतिः अग्न्यादिलोकप्राप्तिवद् अविशेषेणैव प्रजापतिलोक-प्राप्त्यनन्तरं ब्रह्मलोकप्राप्तिं दर्शयति. न हि तत्र 'ब्रह्मलोक'शब्देन कार्यः सः उच्यते इति वक्तुं शक्यम्. पार्थक्येन प्रजापतिलोकस्य उक्तत्वात्. अपरञ्च, "ये च इमे अरण्ये श्रद्धातप इति उपासते ते अर्चिषम् अभिसम्भवन्ति" (छान्दो.उप. 7।10।1) इति छान्दोग्यश्रुतिं विषयीकृत्य हि "अर्चिरादिना तत्प्रथितेः" (ब्रह्मसू.4।3।1) इत्युपक्रमः आचार्येण कृतः. अन्यत्र 'अर्चिः'शब्दस्य अभावात्, तत्र च अन्ते "ब्रह्म गमयति" (छान्दो.उप.7।10।1) इति उच्यते. तथाच छान्दोग्ये अनुक्तानाम् अन्यत्र उक्तानां लोकानां मार्गैक्यसिध्यर्थं तत्रैव सन्निवेशो, "वायुम् अब्दात्", "तडितोऽधिवरुणः", "वरुणाच्चाधीन्द्र-प्रजापती" (ब्रह्मसू.4।3।2-4) इत्यन्तेन उक्तः. एवं सति आदौ अर्चिषं, ततो अहः, ततः सितपक्षं, ततः उदगयनं, ततः संवत्सरं, ततो वायुं, ततो देवलोकं, ततो आदित्यं, ततः चद्रमसं, ततो विद्युतं, ततो वरुणं, ततः इन्द्रं, ततः प्रजापतिं, ततश्च अमानवेन पुरुषेण ब्रह्मप्राप्तिः इति निर्णयः सम्पद्यते. एवं सति प्रजापतिलोकाद् अन्यस्य कार्यब्रह्मलोकस्य असम्भवात् तच्छङ्कापि भवितुं नार्हति यद्यपि, तथापि व्यासोक्तमार्गैक्यम् अमन्वानः तथा अवदद् इति ज्ञायते. परन्तु वेदार्थनिर्णयार्थमेव प्रवृत्तत्वाद् भगवदवतारत्वाच्च तदुक्तएव शास्त्रार्थः इति मन्तव्यम्. किञ्च, "स प्रजापतिलोकं स ब्रह्मलोकम्" (कौशि.उप.1।3) इत्यत्र 'ब्रह्म'पदस्य परवाचकत्वं तेनापि वाच्यं चेत्, तद्दृष्टान्तेन अन्यत्रापि तथैव वाच्यं, बाधकाभावात्.

ननु परस्य व्यापकत्वाद् निर्विशेषत्वाच्च न गन्तव्यता उपपद्यते. जीवस्यापि अविद्योपाध्यवच्छिन्नतादशायां परब्रह्मणि गन्तृत्वासम्भवात् तन्नाशे च वस्तुतो अभिन्नत्वात् स्वरूपेण अवस्थानमेव भवतीति न गन्तृत्वमपि उपपद्यते, तस्यैव अभावात्. जीवत्वदशायान्तु उपाध्यवच्छेदाद् गन्तृत्वं जीवस्य अपरस्य ब्रह्मणश्च आविद्यकरूपनामवत्त्वेन गन्तव्यता च उपपद्यते. उपासना-फलत्वाद् अस्य गमनस्य उपास्यस्य च सगुणत्वेन तत्प्राप्तेरेव उचितत्वाच्च. निर्गुणब्रह्मविद्यावतो गन्तृत्वासम्भवः इति उक्तम्, अतो बादरिमतमेव साधीयः. नच 'ब्रह्म'पदस्य मुख्यार्थत्वम् उक्तरीत्या अत्र सम्भवति. अतो अत्र अमुख्यार्थ-त्वमेव अनुसर्तव्यम् इति चेत्, स्याद् एतद् एवं यदि औपाधिकम् उपास्यरूपं जीवत्वं वा स्याद्, नतु एवम्. "प्रकृतैतावत्वं हि प्रतिषेधति"(ब्रह्मसू.3।2।22 ) इत्यादिभिः "तद्‌गुणसारत्वाच्च तद्व्ययपदेशः"(ब्रह्मसू.2।3। 29) इत्याद्य-धिकरणैः श्रुत्यर्थनिर्णयेन ब्रह्मणि विशेषाणाम् औपाधिकत्वस्य जीवपुरूषोत्त-माभेदस्य च पुरस्तादेव निरस्तत्त्वात्. नच व्यापकत्वं गन्तव्यत्वे बाधकं, प्रारब्धभोगं विना तत्प्राप्त्यसम्भवात्. यदा यत्र तद्भोगसमाप्तिः तदा तत्र तत्प्राप्तेः निष्प्रत्यूहत्वात्. किञ्च. उपास्यरूपाणां सर्वेषां निर्गुणत्वमेव, उपासकस्य परं सगुणत्वेन तत्तारतम्यात् फलतारतम्यम्. यस्तु भगवदनुग्रहेण प्राकृतगुणरहितो अभूत्, सः निर्गुणब्रह्मविद्यावान् इति उच्यते. तादृशस्यैव मुक्तिप्रकारद्वयम् उक्तं, सद्योमुक्तिक्रममुक्तिभेदेन. "न तस्मात् प्राणाः उत्क्रामन्ति अत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्म अप्येति"(बृहदा.उप.6।4।22) इत्यादिश्रुतिस्तु प्रारब्धरहितविषया. निर्गुणब्रह्मविद्यावतोऽपि प्रारब्धभोगस्तु त्वयापि वाच्यः, अन्यथा प्रवचनासम्भवेन ज्ञानमार्गएव उच्छिद्येत. "ते ब्रह्मलोके तु परान्तकाले" (महाना.उप.12।3) इतिश्रुतिरपि परान्तकालएव येषां प्रारब्धभोगसमाप्तिः तद्विषयिणी इति मन्तव्यम्. अन्यथा "वेदान्तविज्ञान" (महाना.उप.12।3) इत्याद्युक्तधर्मविशिष्टानां मुक्तौ विलम्बो न उपपद्येत इति दिक्॥14॥

नच कार्ये प्रतिपत्यभिसन्धिः॥15॥

अपिच. "ब्रह्मविदाप्नोति परम्" (तैत्ति.उप.2।1) इति सङ्क्षेपेण उक्त्वा, "तदेष अभ्युक्ता" इति तद्विरिकाम् ऋचं प्रस्तुत्य, सा उक्ता "सत्यं ज्ञानम् अनन्तं ब्रह्म. यो वेद निहितं गुहायां परमे व्योमन्, सो अश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तत्रैव) इति. अत्र उपक्रमानुरोधेन परेणैव ब्रह्मणा सह सर्वकामभोगलक्षणा प्रतिपत्तिः उच्यतइति कार्यरूपे वस्तुमात्रे प्रतिपत्तिः न क्वापि श्रुतेः अभिप्रेता, अतो अत्रापि परमेव 'ब्रह्म'पदेन उच्यते. ऋगर्थस्तु आनन्दमयाधिकरणे प्रपञ्चितइति न अत्र उक्तः॥15॥

इति चतुर्थाध्याये तृतीयपादे तृतीयं कार्यं बादरिः इति अधिकरणम्॥3॥

अप्रतीकालम्बनान्नयतीति

## बादरायण उभयथा दोषात् तत्क्रतुश्च॥16॥ (4।3।4)

क्रममुक्त्यधिकारिणः प्रारब्धं भुक्त्वा अमानवेन पुरुषेण प्रापिताः परमेव ब्रह्म प्राप्नुवन्ति इति सिद्धम्. तत्र इदं सन्दिह्यते. अर्चिरादिलोकप्राप्तिः हि उपासनाविशेषफलम्. एवं सति अमानवः पुरुषः तान् सर्वान् ब्रह्म प्रापयति उत कांश्चिदेव? इति. किम् अत्र युक्तं? सर्वानेव इति. यतो अर्चिरादिमार्गगतानाम् अन्ते ब्रह्मप्रापणार्थमेव सः नियुक्तः, ततो अन्यथाकरणे हेत्वभावात् तथैव सः कर्ता इति प्राप्ते, उच्यते. श्रुतौ ब्रह्मत्वेनैव सर्वत्र उपासनायाः उक्तत्वाद् उपास्येषु भगवद्विभूतिरूपत्वेन शुद्धब्रह्मरूपेष्वपि अतथात्वं ज्ञात्वा श्रुतिः ब्रह्मत्वेन उपासनायाः फलसाधनत्वं वदति, नतु उपास्ये ब्रह्मतामपि इति मन्वानाः यः उपासते, ते प्रतीकालम्बनाः इति उच्यन्ते. तथाच सत्यपि वेदविहितत्वेन उपासनायाः कृतत्वेन सफलत्वात् तत्फलत्वेन उपासकानाम् अर्चिरादिलोक-प्राप्तावपि तान् अमानवः पुरुषो ब्रह्म न प्रापयति, किन्तु शुद्धब्रह्मत्वं ज्ञात्वा यः उपासते, तानेव ब्रह्म प्रापयति इति बादरायणः आचार्यो मन्यते. तत्र हेतुम् आह उभयथा दोषाद् इति.

वस्तुतो यद् ब्रह्मरूपं, तत्र अब्रह्मत्वनिश्चयः उपासनार्थं च ब्रह्मत्वेन भावनम् एवम् उभयथाकरणे दोषः सम्पद्यतइति तस्य न ब्रह्मप्राप्तौ अधिकारो अस्तीति युक्तं तदनयनम् इति अर्थः. तथाच श्रुतिः "असन्नेव स भवति, असद् ब्रह्मेति वेद चेद्"(तैत्ति.उप.2।6) इति, "योन्यथा सन्तमात्मानम् अन्यथा प्रतिपद्यते, किं तेन न कृतं पापं चोरेणात्मापहारिणः"(महाभा.शान्तिप.221। 27) इति.

एवं ज्ञानमार्गीयव्यवस्थाम् उक्त्वा भक्तिमार्गीयस्यापि ताम् आह तत्क्रतुश्च इति. "सर्वं मद्भक्तियोगेन"(भाग.पुरा.11।20।32) इति वाक्याद् न तस्य उपासनापेक्षेति न प्रतीकादिसम्भावना तत्र. "कथञ्चिद् यदि वाञ्छति" (तत्रैव) इति वाक्याद् इच्छामात्रेण तद्भोगकरणानन्तरं प्राचीनभगवद्भजन-लक्षणक्रतुश्च नीयते इति अर्थः. वस्तुतस्तु भक्तस्य अमानवपुमपेक्षाभावात् स्वयमेव ब्रह्मलोकान् प्राप्नोति इति ज्ञापनाय प्रथमान्तः उक्तः.

ननु ब्रह्मणो अधिकं न किञ्चिद् अस्ति, "न तत्समश्च अभ्यधिकश्च दृश्यते" (श्वेता.उप. 6।8) इतिश्रुतेः. एवं सति छान्दोग्ये सनत्कुमार-नारदसंवादे "स यो नाम ब्रह्म इति उपास्ते" (छान्दो.उप.9।10।1) इत्यादिना नाम-वाङ्-मनः-सङ्कल्प-चित्त-ध्यान-विज्ञानादीनां ब्रह्मत्वेन उपासनम् उत्तरोत्तरं पूर्वस्मात् पूर्वस्माद् भूयस्त्वं च उच्यते. अतो न ब्रह्मत्वं सर्वेषाम् उपास्यानां वक्तुं शक्यम् इति चेद्, मैवम्. विभूतिरूपाणां नियतफलदातृत्वाद् येन रूपेण अल्पफलदानं, तत्र अधिकगुणप्राकट्ये प्रयोजनाभावात् तावन्मात्र-गुणप्रकटनं, येन रूपेण ततो अधिकफलदानं, तत्र ततो अधिकगुणप्रकटनमिति पूर्वस्माद् आधिक्यम् उच्यते. एवमेव सर्वत्र. नियतफलदानन्तु स्वतन्त्रेच्छत्वाद् लीलारूपमिति न अनुपपन्नं किञ्चित्. प्रतिमादिषु आवाहनेन सन्निहिते विभूतिरूपे तद्भावनं पूजामार्गे. भक्तिमार्गेतु भक्त्या तत्र प्रकटे तथा. गुरौतु, "शाब्दे परे च निष्णातं ब्रह्मणि" (भाग.पुरा.11। 3।21) इति विशेषणवत्त्वेन भगवदावेशात् तत्र तद्भावनम् इति सर्वम् अवदातम्.

अपिच बादरि-जैमिनिमतोक्त्यनन्तरं स्वमतोक्त्या तत्समानविषयत्वम् अत्रापि इति अवगम्यते. तत्रच कार्यब्रह्मलोकप्राप्तिपरब्रह्मप्राप्तिविषयत्वम् उक्तं पूर्वोत्तरपक्षभेदेन. बादरिमते सविशेषस्यैव उपास्यत्वाद् विशेषाणां च आविद्यकत्वाद् उपासनानां सर्वासां प्रतीकतद्रूपत्वमेव सिध्यति. एवं सति अप्रतीकालम्बनान् नयति इति वदता व्यासेन बादरिमतानुसारिणः उपासकस्य न कस्यापि ब्रह्मप्राप्तिः इति ज्ञाप्यते. वस्तुतस्तु उपासनायाम् उपास्यस्वरूप-ज्ञानस्यापि अङ्गत्वात् तन्मतीयानाम् उक्तरीत्या तदभावेन निरङ्गत्वाद् अर्चिरादि-प्राप्तिरपि न सम्भवति, किं पुनः ब्रह्मणः इति निगूढाशयो व्यासस्य. एवं सति परप्राप्तावेव उपोद्बलकम् उक्तं भवतीति सैव व्यासाभिमत इति सिद्धम्. येतु प्रतीकेषु अब्रह्मक्रतुत्वं वदन्तः पञ्चाग्निविद्यायाः तथात्वेऽपि वचनबलात् तद्वतो ब्रह्मप्राप्तिः इति वदन्ति, तत्र इदम् उच्यते. वचनन्तु वस्तुसतः पदार्थस्य बोधकं नतु कारकम्, अतः तत् चेद् बोधयति तदा प्रतीकालम्बनान् नयति इति व्यासोक्त्यविरोधाय तत्रापि अप्रतीकत्वम् ऊरीकार्यम्, अन्यथा पञ्चाग्नि-विद्यानिरूपिकां श्रुतिं पश्यन् एवं सः न वदेत्.

नच औत्सर्गिकं पक्षम् आश्रित्य तथा उक्तम् इति वाच्यम्. तस्य बाधकापनोद्यत्वाद् वचनस्य च उक्तन्यायेन अबाधकत्वात्. यत्र वचनस्य बाधकत्वम् उच्यते, तत्र बाधबोधकत्वमेव, नतु तथात्वमिति उपेक्षणीयाः ते.

ननु मनःप्रभृतीनां शुद्धब्रह्मत्वे "मनो ब्रह्म उपास्ते"(छान्दो.उप.9।3 ।2)इति वदेद्, नतु प्रकारवाची 'इति'शब्दशिरस्कं 'ब्रह्म'पदम्, अतः उपासना-प्रकारावच्छेदकत्वमेव 'ब्रह्म'पदस्य, नतु स्वरूपनिरूपकत्वम् इति चेद्, हन्त इदं शब्दार्थानवगमविजृम्भितमेव, यतो "मन उपास्व"(छान्दो.उप.9।3। 1) इति उक्त्वा तदुपासनाफलं "यावन्मनोगतं तत्र अस्य कामचारो भवति" इति वदिष्यन् तदुपासनायाः एतत्फलसाधकत्वे प्रयोजकरूपाकाङ्क्षायाम् आह "मनो ब्रह्म" (छान्दो.उप. 9।3।1) इति. 'इति'शब्दो अत्र हेतुत्ववाची. तथाच यतो मनो ब्रह्म, अतो हेतोः तदुपासनं तादृक्फलसाधकम् इति अर्थः. अतएव "मनो हि ब्रह्म मन उपास्व" इति पूर्वम् उक्तम्. सर्वत्र एवमेव ज्ञेयम्॥16॥

इति चतुर्थाध्याये तृतीयपादे चतुर्थम् अप्रतीकालम्बनाधिकरणम्॥4॥

## विशेषं च दर्शयति॥17॥ (4।3।5)

सर्वाणि उपास्यानि रूपाणि ब्रह्मरूपाण्येवेति तदुपासकानां परप्राप्तिरेव इति सिद्धम्. तत्र इदं चिन्त्यते : ज्ञानमार्गीयाणां भक्तिमार्गीयाणां च अविशेषेणैव परप्राप्तिः उत कश्चिद् विशेषो अस्ति? इति. तत्र उभयोरपि ब्रह्मोपासकत्वेन अविशेषेणैव फलं भवति इति प्राप्ते, प्रत्याह. विशेषं च श्रुतिः दर्शयति. तैत्तिरीयके पठ्यते "ब्रह्मविद आप्नोति परम्" (तैत्ति.उप.2।1) इति गूढाभि-सन्धिना सामान्यतः एतावदुक्त्वा, गूढं तम् उद्घाटयन्ति अतिगोप्यत्वम् अस्मिन् अर्थे अनुभवैकवेद्यत्वं च ज्ञापयन्ति आह "तदेषाभ्युक्ता सत्यं ज्ञानम् अनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सो अश्नुते सर्वान् कामान् सह ब्रह्मणा

विपश्चिता" (तत्रैव) इति. 'तत्' पूर्वोक्तं प्रतिपाद्यत्वेन अभिमुखीकृत्य एष ऋग् उक्ता, तदनुभवकर्तृभिः इति शेषः. 'ब्रह्मविद्' अक्षरब्रह्मविद्, 'आप्नोति' सान्निध्याद् अक्षरमेव आप्नोति. एतावान् अर्थो "यो वेद" इति अन्तयर्चा उक्तः. अथ 'परमाप्नोति' इति अर्थः उच्यते. 'निहितम्' इत्यादिना. अतएव मध्ये क्रियापदम् उभयसम्बन्धित्वज्ञापकत्वम् उक्तम्.

तत्प्राप्तिश्च मर्यादा-पुष्टिभेदेन द्वेधा. तत्र आदौ मर्यादायाम् उच्यते. इह अयम् आशयो ज्ञेयः "नायमात्मा प्रवचनेन" (ठोप.उप.2।22) इति श्रुत्या भगवद्वरणातिरिक्तसाधननिरासः क्रियते पुरुषोत्तमप्राप्तौ. एवं सति अक्षरब्रह्म-ज्ञानस्य तत्साधनत्वे उच्यमाने तद्विरोधः स्यात्. तेन एवम् एतद् अर्थो निरूप्यते. ज्ञानमार्गीयाणाम् अक्षरज्ञानेन अक्षरप्राप्तिः, तेषां तदेकपर्यवसायित्वाद्, भक्ता-नामेव पुरुषोत्तमपर्यवसायित्वात्. तदुक्तं भगवद्गीतासु "एवं सततयुक्ता ये" इति प्रश्ने "मय्यावेश्य मनो ये मां" (भग.गीता 12।2), "ये तु अक्षरम् अनिर्देश्यं" (भग. गीता.12।3), श्रीभागवते च "भक्त्याहम् एकया ग्राह्यः" (भाग.पुरा. 11।14। 21), "तस्मान् मद्भक्तियुक्तस्य" इति उपक्रम्य, "न ज्ञानं नच वैराग्यं प्रायः श्रेयो भवेद् इह" (भाग.पुरा.11। 20।31) इत्यादिना. तथाच ब्रह्मविदं चेद् भगवान् वृणुते, तदा भक्तिः उदेति. तत्प्रचुरभावे सति स्वयं तद्धृदि प्रकटीभविष्णुः स्वस्थानभूतं व्यापिवैकुण्ठं 'तद्गुहायां' हृदयाकाशे प्रकटीकरोति. तत् 'परमव्योम'शब्देन उच्यते. अलौकिकप्रयोगेण तस्य अलौकिकत्वं ज्ञाप्यते. यथा स्वस्थापितं वस्तु अवश्यं स्वदर्शनयोग्यं भवति, तथा अत्र भगवानपि इति ज्ञापनाय 'निहितम्' इति उक्तम्.

तथाच 'परमाप्नोति' इति पदविवृतिरूपत्वाद् अस्य 'गुहायां' 'परमे व्योम्नि निहितं यो वेद, स "नास्य प्राणा उत्क्रामन्ति इहैव समवनीयन्ते ब्रह्मैव सन् ब्रह्म आप्येति" (बृहदा.उप.6।4।22) इति श्रुत्युक्तरीत्या 'परमाप्नोति' इति अर्थः सम्पद्यते. अथ शुद्धपुष्टिमार्गे अङ्गीकृतस्य व्यवस्थाम् आह, "सो अश्नुते" इत्यादिना. अत्र अयम् अभिसन्धिः. यथा स्वयं प्रकटीभूय लोके लीलां करोति तथा अत्यनुग्रहवशात् स्वान्तःस्थितमपि भक्तं प्रकटीकृत्य तत्स्नेहाति-शयेन तद्वशः सन् स्वलीलारसानुभवं कारयतीति 'सः' भक्तो 'ब्रह्मणा' परब्रह्मणा पुरुषोत्तमेन सह "सर्वान् कामान् अश्नुते" इति. 'च'काराद् उक्ता श्रुतिः स्मृतयश्च सङ्गृह्यन्ते. एवं सति ज्ञानमार्गीयाणाम् अक्षरप्राप्तिरेव, भक्तानामेव पुरुषोत्तमप्राप्तिः इति सिद्धम्॥17॥5॥

इति श्रीवेदव्यासमतवर्ति-श्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये चतुर्थाध्यायस्य तृतीयः पादः समाप्तः

## *चतुर्थो अध्यायः चतुर्थः पादः*

### सम्पद्याविर्भावः स्वेन शब्दात्॥1॥ (4।4।1)

"ब्रह्मविदाप्नोति परम्" (तैत्ति.उप.2।1) इत्युपक्रम्य, "सो अश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तैत्ति.उप.2।1) इति तैत्तिरीयके पठ्यते. तत्र इदं सन्दिह्यते, किम् अन्तःस्थितएव अश्नुते, उत पुनर्जन्म प्राप्य? इति. तत्र अन्त्यस्तु अनुपपन्नः. "न स पुनरावर्तते" (छान्दो. उप. 8।15।1), "तेषामिह न पुनरावृत्तिरस्ति" (बृहदा.उप.6।2।15) इत्यादि-श्रुतिविरोधात् कर्माभावाच्च इति प्राप्ते प्रतिवदति, सम्पद्य ब्रह्म सम्पद्यापि स्थितस्य जीवस्य प्रभोः अत्यनुग्रहवशात् स्वरूपात्मक-भजनानन्द-दित्सायां तत्कृतः आविर्भावो भवत्येव. आविर्भावस्य भगवदधीनत्वज्ञापनाय अस्य तत्र कर्तृत्वं न उक्तम्.

ननु उक्तं "न स पुनरावर्तते" (छान्दो.उप.8।15।1) इत्यादिश्रुति-विरोधः कर्माभावश्च बाधकः इत्यतः आह स्वेन इति. 'स्व'शब्दो अत्र भगवद्वाची. तथाच भगवत्स्वरूपबलेनैव आविर्भावः इति अर्थः. एवं सति उक्तश्रुतिः मर्यादामार्गविषयिणीति न विरोधः इति भावः. तेषाम् इह प्रपञ्चे न पुनरावृत्तिः अस्ति इति हि श्रुतिः आह. लीलायाः प्रपञ्चातीतत्वात् तत्र आविर्भावस्य निषेधाविषयत्वादपि न विरोधः. अत्र प्रमाणाकाङ्क्षायाम् आह शब्दाद् इति. "सो अश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तैत्ति.उप. 2।1) इति श्रुतिः पुरुषोत्तमेन सह सर्वकामभोगं वदति. सच न विग्रहं विना सम्भवतीति श्रुतिबलादेव तथा मन्तव्यम् इति अर्थः॥1॥

हेत्वन्तरम् आह.

मुक्तः प्रतिज्ञानात्॥2॥

अत्र उपक्रमे "ब्रह्मविदाप्नोति परम्"(तैत्ति.उप.2।1) इति वाक्येन परप्राप्तिलक्षणां मुक्तिं प्रतिज्ञाय हि तद्विवृतिरेव "सो अश्नुते"(तत्रैव) इत्यादिना क्रियते. तेन पुष्टिमार्गीयमुक्तिरूपत्वमेव तस्य अशनस्य सिध्यति, अतोऽपि हेतोः तदाविर्भावस्य न लौकिकत्वं नच आवृत्तिरूपत्वम् इति अर्थः॥2॥

आत्मा प्रकरणात्॥3॥

ननु परस्य ब्रह्मणो निर्गुणत्वात् कामभोगस्य गुणसाध्यत्वात् "सह ब्रह्मणा" इत्यत्र 'ब्रह्म'पदं सगुणतत्परम्, अतो न तस्य मुक्तिरूपत्वम् इत्यतः आह. अत्र 'ब्रह्म'पदेन आत्मा व्यापको मायातद्‌गुणसम्बन्धरहितो यः सएव उच्यते. कुतः प्रकरणात्. "ब्रह्मविदाप्नोति परम्"(तैत्ति.उप.2।1) इति उपक्रम्य तत्पाठाद् गुणातीतस्यैव एतत्प्रकरणमिति तदेव अत्र 'ब्रह्म'शब्देन उच्यते इति अर्थः॥3॥

अविभागेन दृष्टत्वात्॥4॥

ननु "ब्रह्मविद् आप्नोति परम्" (तैत्ति.उप.2।1) इति भिन्नं वाक्यम्, ऋग् भिन्ना, अतो न एकं प्रकरणमिति सगुणमेव तत्र 'ब्रह्म'पदेन उच्यते इति आशङ्क्य प्रतिवदति. पूर्ववाक्येन समम् अविभागेनैव इयम् ऋक् पठिता, नतु विभागेन. कुतः? दृष्टत्वात्. 'ब्रह्मविद्' इतिवाक्यानन्तरं 'तत्' पूर्वोक्तम् अर्थं प्रतिपाद्यत्वेन अभिमुखीकृत्य एषा ऋग्

उक्ता इति श्रुतिः दृश्यते "तदेषा अभ्युक्ता" (तैत्ति.उप.2।1) इति. तेन पूर्ववाक्योक्तार्थम् अधिकृत्यैव ऋग् उच्यतइति गुणातीतमेव तद् अत्र वाच्यम् इति अर्थः॥4॥
इति चतुर्थाध्याये चतुर्थपादे प्रथमं सम्पद्याविर्भावाधिकरणम्॥1॥

## ब्राह्मेण जैमिनिरुपन्यासादिभ्यः॥5॥ (4।4।2)

पूर्वेण मुक्तो जीवो भगवदनुग्रहातिशयेच्छातो बहिः आविर्भूतो गुणातीतेन पुरुषोत्तमेनैव सह सर्वान् कामान अश्नुते इति सिद्धम्. अथ तत्रैव इदं विचार्यते. आविर्भूतो जीवः प्राकृतेन शरीरेण भुंक्ते, उत अप्राकृतेन? इति. तत्र भोगस्य लौकिकत्वे तदायतनस्यापि तादृशेनैव भवितव्यम् इति मन्वानं प्रति आह. ब्राह्मेण ब्रह्मसम्बन्धिना ब्रह्मणा भगवतैव स्वभोगानुरूपतया सम्पादितेन सत्यज्ञानानन्दात्मकेन शरीरेण पूर्वोक्तान् अश्नुते इति जैमिनिः आचार्यो मनुते. तत्र हेतुः उपन्यासादिभ्यः इति. "ब्रह्मविद् आप्नोति परम्" (तैत्ति.उप.2।1) इति ब्रह्मविदः परप्राप्तिं प्रतिज्ञाय तदर्थस्यैव उपन्यासो अग्रिमया ऋचा क्रियते, "सो अश्नुते" (तैत्ति.उप.2।1) इत्यादिना. तथाच परप्राप्तेः मुक्तिरूपत्वात् पुष्टिमार्गीयायाः तस्याः एवंरूपत्वाद् अक्षरब्रह्मणः पुरुषोत्तमायतनरूपत्वात् तदात्मकमेव शरीरं तस्य वक्तुम् उचितं, नतु प्राकृतम्. एतद् बोधनायैव अग्रे अन्नमयादीनि विभूतिरूपाणि उक्तानि. भक्तशरीरे प्रतीयमानानाम् अर्थानां विभूतिरूपत्वेन ब्रह्मात्मकत्वं तेन साधितं भवति. इदमेव 'आदि'पदेन बहुवचनेन च ज्ञाप्यते. एतद् आनन्दमयाधिकरणे प्रपञ्चितम्, अतो न अत्र पुनः उच्यते. यत्र कर्मवादी जैमिनिः एवं मनुते, तत्र अन्येषाम् एवम् अङ्गीकारे किम् आश्चर्यम् इति ज्ञापनाय तन्मतोपन्यासः कृतः॥5॥

चिति तन्मात्रेण तदात्मत्वाद् इति औडुलोमिः॥6॥

"स यथा सैन्धवघनो अनन्तरो अबाह्यः कृत्स्नो रसघन एवं वा अरे अयम् आत्मा अनन्तरो अबाह्यः कृत्स्नः प्रज्ञानघनः" (बृहदा.उप.6।1।13) इति श्रुतौ 'घन'पदेन ज्ञानात्मकविग्रहात्मत्वं ब्रह्मणो बोध्यते, अन्यथा न वदेत्, प्रयोजनाभावात्. तथाच तादृशेन सह भोगकर्त्रा तादृशेनैव भाव्यम् इति, चिति चिद्रूपे ब्रह्मणि, तन्मात्रेण चिन्मात्रेण रूपेण कामान् भुंक्ते, नतु विग्रहेण. श्रुतौ जीवस्य तथात्वस्य अनुक्तेः. पूर्णानन्दत्वाद् भगवतः तत्सम्बन्धेन तदानन्दान् अनुभवति इति अर्थः सम्पद्यते. चिदात्मत्वं जीवस्य यतो नैसर्गिकम् इति औडुलोमिः आचार्यो मनुते. "अशरीरं वा व" (छान्दो.उप.8।12।1) इति श्रुतिः एतादृशान्यविषयिणी इति ज्ञेयम्. मुक्तिदशायां तदनुभवस्य भगवदिच्छा-विषयत्वाभावाद् न तथा. तथाच एतदेतज्जातीयकानन्दानुभवो अस्य भवत्विति भगवदिच्छैव श्रुतौ 'काम'शब्देन उच्यते॥6॥

एवमप्युपन्यासात् पूर्वभावाद् अविरोधं बादरायणः॥7॥

परमाचार्यो बादरायणस्तु न एवं मनुते. "ब्रह्मविदाप्नोति परम्" (तैत्ति.उप.2।1) इति अस्य उपन्यासः एवमपि विग्रहवत्त्वेनापि कृतो यतः. तथाहि. "यो वेद निहितं गुहायाम्"

(तैत्ति.उप.2।1) इत्यत्र गुहाया उक्तत्वात् तस्याः विग्रहएव सम्भवात्. किञ्च. प्रथमान्तोपस्थितत्वेन 'प्राप्नोति' इति उक्त्या च ब्रह्मविदः परप्राप्तौ स्वातन्त्र्यं ज्ञाप्यते. तदेव 'ब्रह्मणा सह' इति पदेन उपन्यस्तम्. तेन ब्रह्मणोऽपि तत्समानक्रियावत्त्वं ज्ञाप्यते, परन्तु अप्राधान्येन. तथाच भक्तस्यैव कामा वक्तुम् उचिताः. ते च न विग्रहं विना सम्भवन्ति. किञ्च. 'विपश्चिता' इति विशेषणेन विविधं पश्यत् चिद्रूपत्वम् उच्यते. काम-भोगोक्तिप्रस्तावः एतदुक्त्या तदुपयोग्येव सर्वं वाच्यम्. एवं सति भक्त विविधभावान् पश्यति, स्वयं भोगचतुरश्च इति उक्तं भवति. एतेनापि भक्तविग्रहः सिध्यति. ननु विग्रहस्य आगन्तुकत्वेन लौकिकत्वाद् अलौकिकेन ब्रह्मणा भोगो विरुद्धः इत्यतः आह पूर्वभावाद् इति. भक्तप्राप्तेः पूर्वमेव भगवद्दित्सित-भोगानुरूपविग्रहाणां सत्त्वाद् न विरोधः. किञ्च. उक्तश्रुति-सूत्रैः पुरुषोत्तमेन सह भक्तस्य कामभोगो निरूपितः. स यावता अर्थेन विना न उपपद्यते, तावान् सः श्रुत्यभिमतः इति मन्तव्यम्. तथाच ब्रह्मसम्बन्धयोग्यानि शरीराणि नित्यानि सन्त्येव. यथा अनुग्रहो यस्मिन् जीवे, सः तादृशं तदाविश्य भगवदानन्दम् अश्नुते इति सर्वम् अवदातम्॥7॥

सङ्कल्पादेव च तच्छ्रुतेः॥8॥

एवं परप्राप्तिः केषाञ्चिदेव भवति. तत्र हेत्वपेक्षायाम् आह. भजनानन्दं दातुं यमेव सङ्कल्पविषयी करोति, सएव एवं प्राप्नोतीति भगवत्सङ्कल्पएव तत्र हेतुः. तत्र प्रमाणम् आह तच्छ्रुतेः. "नायम् आत्मा" (कठोप.1।2।23) इत्युपक्रम्य, "यमेव एष वृणुते तेन लभ्यः" (तत्रैव) इति श्रुतिः श्रूयते. अतः सएव अत्र हेतुः. श्रुतौ प्रवचनादिनिषेधः कृतः इति अत्रापि 'एव'कार उक्तः. 'च'कारात् तज्जनितैव एतदनुरूपा परमार्तिः संगृह्यते॥8॥

अतएव च अनन्याधिपतिः॥9॥

यतो हेतोः साधनं फलं च उक्तरीत्या स्वयमेव, न अन्यो अतो हेतोः तेषां हृदि साधनत्वेन फलत्वेन प्रभुरेव स्फुरति, न अन्यः. तेन अनन्याः ते. तेषामेव अधिपतिः पुरुषोत्तमः. अन्यत्र आधिपत्यं विभूतिरूपैः करोति. अतः "सर्वस्य अधिपतिः" (बृहदा.उप.6।4।22) इति श्रुतिरपि तदभिप्रायेणैव इति भावः. 'च'काराद् "मदन्यत् ते न जानन्ति नाहं तेभ्यो मनागपि" (भाग.पुरा. 9। 6।8) इति भगवद्वाक्यं संगृह्यते. अन्यथा सर्वज्ञस्य अकुण्ठितज्ञानशक्तेः एवं कथनम् अयुक्तं स्यात्. अतः पुष्टिमार्गो अनुग्रहैकसाध्यः प्रमाणमार्गाद् विलक्षणः, तत्र विश्वासश्च तथा इति सिद्धम्॥9॥

अभावं बादरिराह ह्येवम्॥10॥

मुक्तोऽपि जीवः पुष्टिमार्गे अङ्गीकृतो भगवद्दत्तं विग्रहं प्राप्य भजनानन्दं प्राप्नोति इति सिद्धम्. अत्र प्रत्यवतिष्ठते. बादरिः आचार्यो मुक्तस्य देहाद्यभावं मनुते. तत्र हेतुः आह हि एवम् इति. ब्रह्मविदो हि मुक्तिः उच्यते. "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" (बृहदा.उप.4।4।14) इत्याद्युक्त्वा, "यत्र तु अस्य सर्वम् आत्मैव अभूत् तत् केन कं पश्येद्?"

(तत्रैव) इत्यादिना द्वितीयज्ञाननिषेधम् आह ब्रह्मविदः श्रुतिः. तथाच तस्य कामभोगवार्ता दूरतरेति तदाक्षेप्यदेहोऽपि तथा॥10॥

भावं जैमिनिः विकल्पामननात्॥11॥

जैमिनिः आचार्यस्तु मुक्तस्य पुंसो देहादेः भावं सत्तां मन्यते. तत्र हेतुः विकल्पः इत्यादि. "ब्रह्मविद् आप्नोति परम्" (तैत्ति.उप.2।1) इति श्रुत्या ब्रह्मज्ञानस्य तत्प्राप्तिसाधनत्वम् उच्यते. "नायमात्मा" (कठोप.2।22) इति श्रुत्या तु वरणमात्रप्राप्यत्वम्. "सो अश्नुते" (तैत्ति.उप.2।1) इत्यादिना च परप्राप्त्युपन्यासः क्रियते. "इहैव समवनीयन्ते ब्रह्मैव सन् ब्रह्म अप्येति" (बृहदा.उप.4।4।22) इति च पठ्यते. एवं सति मिथो विरोधे तदभावाय उक्त-व्याख्यानरीत्या ज्ञानमार्गीयस्य ब्रह्मज्ञानेन अक्षरब्रह्मप्राप्तिः, पुष्टिमार्गीय-भक्तस्यतु "सो अश्नुते" इत्यनेन उक्ता परप्राप्तिः इति व्यवस्थितविकल्पएव श्रुत्यभिमतः इति ज्ञायते. तेन, "नायमात्मा" इति श्रुतिः परप्राप्तिविषयिणी. "इहैव" इत्यादिश्रुतिस्तु मर्यादामार्गीयविषयिणी इति मन्तव्यम्. एवं सति पुष्टिमार्गीयस्य भोगसाधनात्मकविग्रहवत्त्वं निष्प्रत्यूहं सिध्यति. "तत् केन कं पश्येद्?" (बृहदा.उप.4।4।14) इत्यादिनातु ब्रह्मज्ञानसामयिकीं व्यवस्थाम् आह, नतु तदुत्तरकालीन-परप्राप्तिसामयिकीम् इति किम् अनुपपन्नम् ॥11॥

द्वादशाहवद् उभयविधं बादरायणो अतः॥12॥

ब्रह्मणा सह सर्वकामाशनप्रयोजकं शरीरम्. शरीरत्वस्य भूतजन्यत्व-व्याप्यत्वात् तदभावेन अशरीररूपं, तद्भोगायतनत्वेन शरीररूपमपि इति बादरायणः आचार्यो मन्यते. अत्र हेतुः, अतः इति. तथाविधश्रुतेः इति अर्थः. तथाहि. "भूमैव विजिज्ञासितव्यः"(छान्दो.उप.9।23।1) इति उक्त्वा, तत्स्वरूपम् आह "यो वै भूमा तत् सुखम्" इत्युपक्रम्य, अग्रे उच्यते "यत्र नान्यत् पश्यति नान्यत् श्रुणोति नान्यद् विजानाति स भूमा"(छान्दो.उप.7।24 ।1)इत्यनेन केवलभावविषयत्वं पुरुषोत्तमलक्षणम् उक्त्वा केवलभाववतो भक्तस्य विप्रयोगसामयिकीं व्यवस्थाम् आह "स एव अधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात्"(छान्दो.उप.7।25।2) इत्यादिना. ततः "स वा एष एवं पश्यन् एवं मन्वान एवं विजानन्" इति पूर्वावस्थाम् अनूद्य, संयोगावस्थाम् आह "आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः"(छान्दो.उप.7।25।2) इति वाक्येन, "सो अश्नुते" इति श्रुतिसंवादिनम् अर्थम् उक्त्वा, भक्तस्वरूपम् आह "तस्य ह वा एतस्य एवं पश्यत एवं मन्वानस्य एवं विजानतः आत्मतः प्राणः" (छान्दो.उप.7।25।2) इत्युपक्रम्य, "आत्मतएव इदं सर्वम्" इति. तेन अशरीरत्वं सिध्यति. अव्ययप्रयोगेण अविकृतादेव पुरुषोत्तमात् प्राणाद्याविर्भावः उच्यते. अत्र ल्यब्लोपे पञ्चमी. पूर्वं विरहदशायां प्राणादयो भगवत्येव लीना आसन्, ततः तत्प्राकट्ये ततएव प्राणादयोऽपि सम्पन्नाः इति तत्प्राप्तेः निमित्तत्वं यतो, विभूतिरूपाणामपि पुरुषोत्तमे लयो न अनुपपन्नः. "आत्म-रतिः" इत्यादिना "सोऽश्नुते" इत्यनेन च शरीरत्वम्. जैमिनिरपि अतएव "ब्राह्मेण"(ब्रह्मसू.4।4।5) इति मनुते. एकस्य

विरुद्धोभयधर्मवत्त्वम् अमन्वानं प्रति वैदिकं दृष्टान्तम् आह द्वादशाहवद् इति. “यः कामयेत प्रजायेयेति स द्वादशरात्रेण यजेत”(तैत्ति.संहि.7।2।9) इति चोदनया “द्विरात्रेण यजेत” (तैत्ति.संहि.7।1।4) इत्यादिवद् नियतकर्तृकत्वेन अहीनत्वं गम्यते द्वादशाहस्य. “द्वादशाहमृद्धिकामा उपेयुः, य एवं विद्वांसः सत्रम् उपयन्ति”(तैत्ति.संहि. 7।5 ।1) इति श्रुत्या च सत्रत्वं बहुकर्तृकस्य गम्यते. एवमेव द्वादशाङ्गशरीरे-न्द्रियप्राणान्तःकरणात्मभिः ‘अश्नुते’ इति सत्रतुल्यत्वम्. वस्तुतो भगवद्विभूति-रूपत्वेन ब्रह्मात्मत्वेन एकरूपत्वम्, अतो द्वादशाहवद् उभयविधम्. सत्रे प्रत्येकं चेतनानां यजमानानां फलभागित्ववद् अत्रापि तादृक् भक्तदेहादीनामपि ब्रह्मात्मकत्वात्. चेतनत्वमेव इत्यपि अनेन दृष्टान्तेन ज्ञाप्यते. अतएव श्रीभागवते “देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्” (भाग.पुरा.7।1।24) इति गीयते॥12॥
इति चतुर्थाध्याये चतुर्थपादे द्वितीयं ब्राह्मेण इति अधिकरणम्॥2॥

## तत्त्वभावे सन्ध्यवदुपपत्तेः॥13॥ (4।4।3)

अथ इदं चिन्त्यते : भगवत्स्वरूपे प्राकृतशरीरइव अवस्था दृश्यन्ते तत्कालीनैः पुम्भिः इति कथम् अप्राकृतत्वम् उपपद्यते? इति तत्र उपपत्तिम् आह. तद्दर्शनस्य वास्तववस्तुविषयकत्वव्यवच्छेदेन पूर्वपक्षव्युदासाय ‘तु’-शब्दः. तत् प्राकृततुल्यतादर्शनम् अभावे तथात्वस्य अभावएव भवति, नतु तत्र प्राकृताः धर्माः सन्ति. ननु अविद्यमानानाम् अर्थानां कथं दर्शनम् उपपद्यते? इत्यतः आह सन्ध्यवद् इति. स्वप्ने यथा वासनावशाद् अविद्यमानानामपि अर्थानां दर्शनं भवति, तथा भगवदिच्छावशात् तत्रापि प्राकृततुल्यत्वदर्शनस्य उपपत्तेः, न प्राकृतत्वं तत्र ज्ञेयम् इति अर्थः. तथाच श्रुतिः.
“सन्ध्यं तृतीयं स्वप्नस्थानं तस्मिन् सन्ध्ये स्थाने तिष्ठन् उभे स्थाने पश्यति इदं च परलोकस्थानं च. अथ यथाक्रमो अयं परलोकस्थाने भवति तम आक्रमम आक्रम्य उभयान् पाप्मन आनन्दांश्च पश्यति, स यत्रायं प्रस्वपिति”(बृहदा.उप.6।3।9) इत्युपक्रम्य,
“स्वयं विहृत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति अत्र अयं पुरुषः स्वयंज्योतिः भवति, न तत्र रथा न रथयोगा न पन्थानो भवन्ति”(बृहदा.उप.6।3।10)

इत्यादिरूपा. एवमेव भगवान् आसुराणां प्राकृतगुणे तमस्येव दुःखात्मके लयं चिकीर्षुः स्वस्मिन् प्राकृतत्वबुद्धिसम्पादनाय तादृशीमिव लीलां दर्शयति, अतो न प्राकृतत्वशङ्कागन्धोऽपि अत्र. अतएव भगवता उक्तं, “माम् आत्मपरदेहेषु प्रद्विषन्तो अभ्यसूयकाः”(भग.गीता16।18) इत्युपक्रम्य “ततो यान्ति अधमां गतिम्”(भग.गीता16।20) इति. तेषाम् आसुरत्वेन मुक्त्यनधि-कारित्वात् तथाकरणम्. अतः सुष्ठूक्तं सन्ध्यवद् उपपत्तेः इति॥13॥
भावे जाग्रद्वत्॥14॥

लौकिकवद् भासमाने लीलापदार्थे यद् दर्शनं भक्तानां, तत्तु भावे विषये विद्यमाने सति भवति. अत्र दृष्टान्तम् आह जाग्रद्वत्. यथा मोहाभाववतः पुंसः सतएव अर्थस्य

दर्शनं तथा इति.

एताभ्यां सूत्राभ्याम् एतदुक्तं भवति. "सो अश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तैत्ति.उप.2।1) इति श्रुत्या भक्तकामपूरणाय भगवान् लीलां करोति इति गम्यते. यद्दर्शन-श्रवण-स्मरणैः भक्तानां दुःखं भवति, तादृशीमपि तां करोति इति श्रूयते. यथा सौभयुद्धे मोहवचनानि, हस्ताद् आयुधच्युतिः, प्रभासीयलीला च. उक्तरीत्या "सो अश्नुते" इति श्रुत्या परब्रह्मत्वम् अवगम्यते. उक्तलीलया तद्वैपरीत्यं च. एवं सति एकस्या वास्तवत्वम्, अन्यस्याः अवास्तवत्वं वाच्यम्.

"ते-ते धामानि उश्मसि"(तैत्ति.संहि.1।3।6।1)

"विष्णोः कर्माणि पश्यतः"(तैत्ति.संहि.1।3।6।2)

"तद् विष्णोः परमं पदं"(तैत्ति.संहि.1।3।6।2)

"तद् विप्रासो विपन्यवः"(ऋग्वेद 1।22।21) इत्यादिश्रुतिभिः,

"सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवं, विश्वं नारायणं देवम् अक्षरं परमं पदं, विश्वतः परमं नित्यं विश्वं नारायणं हरिं, विश्वमेव इदं पुरुषः तद् विश्वम् उपजीवति पतिं विश्वस्य आत्मा ईश्वरं शाश्वतं शिवम् अच्युतम्"

(महाना.उप.11।1-3)

इत्यादिभिश्च शुद्धब्रह्मणः तद्विपरीतदर्शने अवश्यं हेतुः वाच्यः. सतु आसुरव्यामोहनमेव इति पूर्वसूत्रेण उपपादितः. भक्तेभ्यः स्वरूपानन्ददानाय "लोकवत्तु लीलाकैवल्यम्"(ब्रह्मसू.2।1।33) इति न्यायेन या लीलाः करोति, यथा रिङ्गणादिलीला भगवतो नैसर्गिकधर्मरूपानन्दात्मकत्वेन विद्यमानाएव, ता भक्ताः पश्यन्ति इति द्वितीयसूत्रेण उक्तम्. अतएव लीलायाः अनेकरूपत्वाद् ब्रह्मणश्च श्रुतौ सैन्धवदृष्टान्तेन एकरसत्वनिरूपणात् शुद्धब्रह्मधर्मत्वं न सम्भवति इति शङ्कानिरासाय 'कैवल्यम्' इति उक्तम्. "साक्षी चेता केवलो निर्गुणश्च"(श्वेता.उप.6।11) इत्यादिश्रुतिषु या अन्यधर्मराहित्यलक्षणा केवलता उक्ता, सा लीलात्मिकैव, लीलाविशिष्टमेव शुद्धं परं ब्रह्म, न कदाचित् तद्रहितम् इति अर्थः पर्यवस्यति. तेन स्वरूपात्मकत्वं लीलायाः पर्यवस्यति तेन च नित्यत्वम्. एतद् विद्वन्मण्डने प्रपञ्चितम्. अथवा. लीलैव कैवल्यं, जीवानां मुक्तिरूपम्. तत्र प्रवेशः परमा मुक्तिः इति यावद् इति अर्थः॥14॥

इति चतुर्थाध्याये चतुर्थपादे तृतीयं तत्त्वभावाधिकरणम्॥3॥

## प्रदीपवदावेशस्तथा हि दर्शयति॥15॥ (4।4।4)

ननु पूर्णज्ञान-क्रियाशक्तिमता ब्रह्मणा तुल्यभावेन तत्रापि प्रधानभावं प्राप्य कामभोगकरणम् अपूर्णज्ञानक्रियावतो भक्तस्य अनुपपन्नम् इति आशङ्कायां तत्र उपपत्तिम् आह. न हि तदा नैसर्गिकज्ञानक्रियाभ्यां तथा भोक्तुं शक्तो भवति, किन्तु भगवान् तस्मिन् आविशति यदा, तदा अयमपि तथैव भवति इति सर्वम् उपपद्यते. एतदेव

आह प्रदीपवद् इति. यथा प्राचीनः प्रकृष्टो दीपः स्नेहयुक्तायां वर्त्याम् अर्वाचीनायाम् आविष्टः स्वसमानकार्यक्षमां तां करोति, स्नेहाधीनस्थितिश्च भवति स्वयं, तथा अत्रापि इति अर्थः. अत्र प्रमाणम् आह तथाहि दर्शयति श्रुतिः "भर्ता सन् भ्रियमाणो बिभर्ति, एको देवो बहुधा निविष्टः"(तैत्ति.आर.3।14) इति. "सर्वान् कामान्"(तैत्ति.उप.2।1) इति उक्तत्वाद् यस्य कामस्य भोगो यथा निवेशे सति भवति तत्र तथा तदा निवेशः इति बहुधा निवेशः उक्तः. अयं निवेशो न अन्तर्यामित्वेन, तस्य एकधैव प्रवेशात्. निसर्गतः सर्वेषां जीवानां भगवान् भवत्येव प्रभुः यद्यपि, तथापि यं स्वीयत्वेन वृणुते, तस्य विवाहितः पतिरिव 'भर्ता सन्' वरणजस्नेहातिशयेन भक्तेनापि भ्रियमाणः सन्, सइव स्वयमपि तं स्वस्मिन् 'बिभर्ति'. अतएव स्नेहराहित्येन अयोगोलकादिकं विहाय प्रदीपं दृष्टान्तम् उक्तवान् व्यासः. अतएव 'देव'पदम् उक्तम्. स्वरूपानन्ददानाद् भावोद्दीपनात् पूतनादिमुक्तिदानेन स्वमाहात्म्य-द्योतनाद् वैकुण्ठादिस्थितेश्च. तदुक्तं निरुक्ते "दिवो दानाद् वा, दीपनाद् वा, द्योतनाद् वा, द्युस्थानो भवतीति वा यो देवः" (निरु. 7।15) इति. किञ्च भक्तानां कामभोजनार्थं क्रीडाकरणात्, क्रीडायामेव जयेच्छाकरणाद्, भक्तैः सह व्यवहारकरणाद्, भक्तेषु स्वमाहात्म्येच्छादि-द्योतनाद् "न पारये अहं"(भाग.पुरा.10।29।37), "न त्वादृशीं प्रणयिनीम्" (भाग.पुरा.10।57।55) इत्यादिभिः स्तुतिकरणाद्, भक्तप्रपत्तिदर्शनेन कालीयदमनादौ मोदकरणात्, तेष्वेव भक्तिमदकरणात्, ते स्वप्नेऽपि प्रियमेव पश्यन्ति इति स्वप्नकरणात्, तेषां कान्तिकरणाद् इच्छाकरणाद् वा, तन्निकटे गमनादपि 'देवः'. तदुक्तं धातुपाठे "दिवु क्रीडा-विजिगीषा-व्यवहार-द्युति-स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु" (पाणि.धातु.दि.1) इति. एवं सति युक्तमेव तेषां तथात्वम् इति 'हि'शब्देन आह॥15॥

ननु "अस्थूलम् अनण्वह्रस्वम्" (बृहदा.उप.5।8।8) इत्याद्यनन्तरं पठ्यते "न तद् अश्नोति कञ्चन न तद् अश्नोति कश्चन" (बृहदा.उप.5।8।9) इति उक्तश्रुतौ च ब्रह्मणा सह जीवस्य भोगः उच्यते. तथाच सगुण-निर्गुणभेदेन विषयभेदो अवश्यं वाच्यो विरोधपरिहाराय इत्यतः उत्तरं पठति.

स्वाप्ययसम्पत्त्योरन्यतरापेक्षम् आविष्कृतं हि॥16॥

इह अयम् आशयः. "प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः"(ब्रह्मसू.3।2।22) इत्याद्यधिकरणैः "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च"(श्वेता.उप.6।8) इत्यादिश्रुतिभिश्च प्राकृताएव धर्माः निषिध्यन्ते, ब्रह्मणि अप्राकृताएव बोध्यन्ते, अन्यथा तद्बोधनमेव न स्याद् निषेधकवाक्यएव तद्बोधनमपि न स्याद्, "एतस्यैव अक्षरस्य प्रशासने" (बृहदा.उप.5।8।9) इत्यादिरूपम्, अतो अचिन्त्यानन्तशक्तेः भगवतः का वा कार्याक्षमता, यया प्राकृतान् गुणान् ऊरीकुर्याद् अतो निर्गुणमेव सदा सर्वत्र भगवद्रूपम् इति मन्तव्यम्. एवं सति, "तद्यथापि हिरण्यनिधिं निहितम् अक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः एवमेव इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति"(छान्दो.उप.10।32) इति छान्दोग्यश्रुतेः प्रस्वापदशायां न कश्चिद् ब्रह्म अश्नाति,

तच्च न कञ्चन् इति तद्विषयिणी निषेधिका श्रुतिः, "ब्रह्मविद् आप्नोति परम्"(तैत्ति.उप.2।1) इति श्रुत्युक्तपरब्रह्मप्राप्ति-दशाविषयिणी भोगबोधिका सेति न विरोधगन्धोऽपि. एतदेव आह स्वाप्ययः प्रस्वापः, "स्वमपीतो भवति तस्माद् एनं स्वपितीत्याचक्षते"(छान्दो.उप.8।8।1) इतिश्रुतेः. सम्पत्तिः ब्रह्मसम्पत्तिः उक्तरीत्या पुष्टिमार्गीयो मोक्षः. एतयोः अन्यतरापेक्षम् उभयश्रुत्युक्तम् इति अर्थः. भगवत्कर्तृकभोगस्य लीला-रूपत्वात् तस्याश्च, "लोकवत्तु लीला कैवल्यम्" (ब्रह्मसू.2।1।33) इत्यत्र मुक्तित्वेन निरूपणात् तत्प्राप्तेः सम्पद्रूपत्वं युक्ततरम् इति 'हि'शब्दार्थः॥16॥
इति चतुर्थाध्याये चतुर्थपादे चतुर्थं प्रदीपवद् इति अधिकरणम्॥4॥

## जगद्व्यापारवर्जं प्रकरणाद् असन्निहितत्वाच्च॥17॥ (4।4।5)

ब्रह्मणा सह भोगकरणं लौकिकव्यापारयुतम्, उत न इति संशये, तद्युतम् इति पूर्वः पक्षः. तथा सति मुक्तित्वभङ्गात् पूर्वोक्तम् अनुपपन्नम् इति प्राप्ते, आह जगद् इत्यादि. पूर्वोक्तस्य जगत्सम्बन्धी लौकिको यो व्यापारः काय-वाङ्-मनसां तद्वर्जं तद्रहितं भोगकरणम्. तत्र हेतू आह प्रकरणाद् असन्निहितत्वाच्च इति. "ब्रह्मविद् आप्नोति परम्"(तैत्ति.उप.2।1) इत्युपक्रमेण मुक्तिप्रकरणात् तत्र लौकिकव्यापारो असम्भावितः. किञ्च. लीलायाः कालमायाद्यतीतत्वेन प्राकृतं जगद् दूरतरम् इतोऽपि हेतोः न तत्सम्भवः. कदाचिद् लोके लीलाप्रकटनेच्छायां तदधिष्ठानत्वयोग्ये मथुरादिदेशे अतिशुद्धे गोलके चक्षुरिन्द्रियमिव स्थापयित्वा लीलां करोति तदापि लीलामध्यपातिनां न लौकिकव्यापारसम्भवः. न हि चक्षुरिन्द्रियं गोलककार्यं करोति. न वा तन्नाशे नश्यति. एतत् सर्वं "दिवीव चक्षुराततम्" इति श्रुतिव्याख्याने विद्वन्मण्डने प्रपञ्चितम्. किञ्च. छान्दोग्ये, "भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः"(छान्दो.उप.7।23।1) इति उक्त्वा, भूम्नो लक्षणम् आह "यत्र नान्यत् पश्यति नान्यत् श्रुणोति नान्यद् विजानाति स भूमा"(तत्रैव 7।24।1) इति. अत्र 'नान्यद् विजानाति' इति एतावतैव चारितार्थ्येऽपि यद् इन्द्रियव्यापारो निषिद्धः, तत्रापि अन्यविषयकः, तेन भगवद्विषयकः सः सिद्धो भवति इति जगद्व्यापारराहित्यं सिद्धम्. तत्र तेन भगवतएव स्वतन्त्रफलत्वम् उक्तं भवति. न हि सुखस्य अन्यत् प्रयोजनम् अस्ति॥17॥
प्रत्यक्षोपदेशाद् इति चेद्, न आधिकारिकमण्डलस्थोक्तेः॥18॥

ननु एतत्प्रकरणएव छान्दोग्ये पठ्यते "सर्वं ह पश्यति" (छान्दो.उप. 7।26।2) इति सर्वविषयकप्रत्यक्षम् उपदिश्यतइति अन्यविषयकव्यापारराहित्यं न उपपद्यते इति आशङ्क्य, समाधत्ते आधिकारिकेत्यादिना.

अत्र इदम् उच्यते. "सो अश्नुते"(तैत्ति.उप.2।1), "लोकवत्तु लीला कैवल्यम्" इत्यादिभिः नित्यलीलामध्यपातित्वं तस्य उच्यते. "नान्यत् पश्यति" इत्यादिश्रुतिवशाद् जगद्व्यापारवर्जं भोगकरणं पूर्वसूत्रेण उक्तम्.

अत्र इदं विचार्यते : “नान्यत् पश्यति” इति प्रकरणएव “सर्वं ह पश्यति” इति सर्वविषयकं दर्शनम् उच्यते, तत् कथं पूर्वोक्तम् उपपद्यते? इति. किञ्च. एकस्यैव भक्तस्य देश-कालभेदेन क्रियमाणानेकलीलासम्बन्धित्वं भवति. तच्च लीलानित्यतायां न घटते. यतः तत्तद्देश-तत्तत्काल-सम्बन्धिनी सा नित्या. एवं सति एकस्य अनेकरूपत्वं जीवस्य न सम्भवतीति तन्नित्यत्वमपि न सिध्यति इति.

तत्र उच्यते. श्रुतौ ‘सर्व’पदेन न जगद् उच्यते, किन्तु यस्यां-यस्यां लीलायां देशकालभेदेन क्रियमाणायाम् अधिकृतो य एको भक्तः, तस्यैव तावन्ति रूपाणि सन्ति तानि आधिकारिकाणि इति उच्यन्ते. तेषां मण्डलं समूहः तत्र स्थितवस्तुमात्रम् उच्यतइति न अनुपपन्नं किञ्चित्. अतएव अग्रे पठ्यते “सर्वमाप्नोति सर्वशः”(छान्दो.उप.9।26।2) इति, “स एकधा भवति त्रिधा भवति पञ्चधा भवति, सप्तधा नवधा चैव पुनश्च एकादश स्मृतः, शतञ्च दश चैकश्च सहस्राणि च विंशतिः”(तत्रैव) इति. यथा मण्डलवर्तिषु पुंसु न एकस्य प्राथम्येन प्राधान्यं वक्तुं शक्यं, तथा एतेष्वपि रूपेषु इति ज्ञापनाय ‘मण्डल’पदम् उक्तम्॥ 18॥

विकारावर्ति च तथाहि स्थितिम् आह॥19॥

ननु एवं सति “श्वः त्वद्‌गेहम् आयास्ये” इति प्रभुणा उक्ते तदाशया तत्स्थितिः न उपपद्यते. नित्यत्वाद् लीलायाः तस्य कालस्य तदागमनस्य च तदापि वर्तमानत्वात्. तथा प्रभूक्तिरपि न उपपद्यते इति आशङ्क्य समाधत्ते. इह भगवल्लीला प्रकृतिः, तद्विरुद्धो अर्थो विकारः इति उच्यते. तत्र न वर्तते तज्ज्ञानं तादृशं च भवति. यत्स्वरूपं प्रति तथा वदति, तस्य स्वगेहे तदा भगवत्स्थितिज्ञानं न भवति इति अर्थः. उपलक्षणं च एतद्, अतो यद्देश-कालविशिष्टा यादृशी या लीला, तस्याः तादृश्याएव तल्लीलामध्यपातिनो भक्तस्य ज्ञानं, न अन्यविषयकम् इति ज्ञेयम्. अतएव द्वितीयस्यापि, “मह्यं पूर्वम् उक्तम् आसीत् तेन आगतः” इत्येव ज्ञानं भवति. तदैव हि रसोदयः. अतो रसस्वरूपमध्यपातित्वाद् लीलायाः रसस्य च भगवदात्मकत्वाद् भगवद्रूपत्वेन सर्वम् उपपद्यते लीलायाम्. अत्र प्रमाणम् आह तथा हि स्थितिम् आह इति. “सर्वम् आप्नोति सर्वशः” (छान्दो.उप.9।26।2) इति श्रुतिः एकस्यैव भक्तस्य सर्वशः सर्वैः प्रकारैः सर्वलीलारसम् आप्नोति इति वदन्ति उक्तरीत्यैव लीलायां स्थितिम् आह इति अर्थः. अतो वस्त्वेव इदम् अलौकिकम् ईदृशम् इति मन्तव्यं वैदिकैः इति भावः. अलौकिके अर्थे लौकिकरीत्यनुसरणं न युक्तं, किन्तु अलौकिकरीत्यनुसरणमेव युक्तम् इति ‘हि’शब्देन द्योत्यते. एतेन “रसो वै सः” (तैत्ति.उप.2।1) इति श्रुतेः लीलाविशिष्टएव प्रभुः तथेति तादृशएव परमफलम् इति ज्ञापितं भवति॥19॥

दर्शयतश्चैवं प्रत्यक्षानुमाने॥20॥

नच लौकिकयुक्तिविरोधो अत्र बाधकत्वेन मन्तव्यः, किन्तु साधकत्वेन यतः प्रत्यक्षानुमाने श्रुतिस्मृती अपि लौकिकयुक्त्यप्रसारेण अलौकिके भगवत्सम्बन्धिनि अर्थे

अन्यथाभावनं निषेधति,
“नैषा तर्केण मतिरः आपनेया” (कठोप.1।2।9)
“परा अस्य शक्तिः विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च” (श्वेता.उप.6।8)
“अलौकिकास्तु ये भावा न तान् तर्केण योजयेत्”
(महाभा.भीष्मप.5।12) श्रीभागवते च

“न हि विरोध उभयं भगवति अपरिगणितगुणगण ईश्वरे अनवगाह्य-माहात्म्ये अर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तः-करणाशयदुरवग्रहवादिनां विवादानवसरे” (भाग.परा.6।9।36) इत्यादिवाक्यैः अचिन्त्यानन्तशक्तिमत्त्वेन भगवत्स्वरूपस्यैव परमफलत्वं प्रदर्श्यते. किञ्च.

“ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः,
अत्र आह तदुरुगायस्य वृष्णः परमं पदम् अवभाति भूरि”
(ऋग्वेद 2।2।24)

इति ऋग्वेदे पठ्यते. किञ्चित् पाठभेदेन यजुःशाखायामपि. ‘ता’ तानि ‘वास्तूनि’ ‘वां’ गोपी-माधवयोः सम्बन्धीनि ‘गमध्यै’ प्रसादत्वेन प्राप्तुम् ‘उश्मसि’ कामयामहे. तानि कानि? इति आकांक्षायां गूढाभिसन्धिम् उद्घाटयति, ‘यत्र’ श्रीगोकुले ‘गावो भूरिशृङ्गा’ बहुश्रृङ्गा रुरुप्रभृतयो वसन्ति इति शेषः. ग्राम्यारण्यपशूपलक्षणार्थम् उभयोरेव ग्रहणम्. अत्र आह भूमावेव ‘तदुरुगायस्य’ बहुगीयमानस्य ‘वृष्णः’ भक्तेषु कामान् वर्षति इति वृषा तस्य ‘पदं’ स्थानं वैकुण्ठं, ततोऽपि परमम् अधिकम्, अत्र विचित्रलीलाकरणात्. ‘भूरि’ यमुनापुलिन-निकुञ्ज-गोवर्धनादिरूपत्वेन बहुरूपम्. तथाच तत्रत्यानि तानि ‘कामयामहे’ इति वाक्यार्थः सम्पद्यते.

एतेन लीलासम्बन्धिवस्तूनां यत्र फलत्वेन प्रार्थनं, तत्र तल्लीलाकर्तुः परमफलत्वे किं वाच्यम् इति आशयो ज्ञाप्यते.

“अथ ह वा व तव महिमाऽमृतसमुद्रविप्रुषासकृल्- लीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्ट-श्रुत-सुखलेशाभासाः परमभागवता” (भाग.पुरा.6।9।39)

इति श्रीभागवते. एतेनापि कैमुतिकन्यायेन प्रभोरेव स्वतःपुरुषार्थत्वं ज्ञाप्यते. फलप्रकरणत्वात् तदेव आचार्यतात्पर्यविषयः इति ज्ञायते.
भोगमात्रसाम्यलिङ्गाच्च॥21॥

इतोऽपि हेतोः पुरुषोत्तमस्वरूपमेव परमं फलम् इति ज्ञायते. यतः, "सो अश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" (तैत्ति.उप.2।1) इति श्रुतौ भक्तसाम्यम् उच्यते तच्च पुरुषोत्तमएव सम्भवति. यतः सख्यं दत्वा तत्कृतात्मनिवेदनम् अङ्गीकुर्वन् अतिकरुणः स्वस्वरूपानन्दम् अनुभावन् तं प्रधानीकरोति. अन्यथा भक्तो अनुभवितुं न शक्नुयाद्, युक्तं च एतत्. प्राप्तं फलं स्वाधीनं भवत्येव, अन्यथा फलत्वमेव न स्यात्. तथाच अस्माद् लिङ्गादपि प्रभोरेव परमफलत्वं सिध्यति. "न तत्समश्च अभ्यधिकश्च दृश्यते" (श्वेता. उप.6।8) इति श्रुतिविरोधपरिहाराय 'मात्र'पदम्. नच अत्र कामभोगस्य फलत्वं शङ्कनीयम्. "आप्नोति परम्" इति एतद्व्याकृतिरूपत्वात् स्वरूपानुभव-रूपत्वाद् भोगस्य. अनुभूयमानस्यैव हि सुखस्य लोके पुरुषार्थत्वोक्तेः॥21॥

एवं भगवतः स्वतःपुरुषार्थरूपत्वम् उक्त्वा कर्मफलभोगानन्तरम् आवृत्तिवद् अत्रापि आवृत्तिः भविष्यति इति आशङ्कानिरासाय उत्तरं पठति.

अनावृत्तिः शब्दाद् अनावृत्तिः शब्दात्॥22॥

अनावृत्तिः भक्तानां ज्ञानिनां च उच्यते. तत्र मानं शब्दः. सच

"तया ऊर्ध्वम् आयन् अमृतत्त्वम् एति" (छान्दो.उप.10।6।6)

"न तेषां पुनरावृत्ति" (छान्दो.उप.4।15।6)

"एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते"(तत्रैव 4।15।5)

"ब्रह्मलोकम् अभिसम्पद्यते नच पुनरावर्तते" (तत्रैव8।15।1)

इत्यादिरूपस्तु ज्ञानिनां ताम् आह. न हि भक्तानां नाड्यादिप्रयुक्तम् अमृतत्वम्. "तस्मान् मद्भक्तियुक्तस्य योगिनो वै मदात्मनः, न ज्ञानं नच वैराग्यं प्रायः श्रेयो भवेद् इह" (भाग.पुरा. 11।20।31) इत्यादिवाक्येभ्यः.

किन्तु 'यमेव'(कठोप.2।22) इति श्रुतेः वरणमात्रलभ्यः पुरुषोत्तमः. एवं सति "ब्रह्मविद् आप्नोति परम्"(तैत्ति.उप.2।1) इति श्रुतेः विरोध-परिहारपूर्वकोक्तव्याख्यानरीत्या भक्तस्य परं ब्रह्म प्राप्तस्य निर्दोषत्वाद् आवृत्तिहेत्वभावात् प्रपञ्चे अनावृत्तिः सम्भवति. तादृशं प्रति ईश्वरेच्छापि न तथा भवितुम् अर्हति. "ये दारागारपुत्राप्तप्राणान् वित्तम् इमं परं, हित्वा मां शरणं याताः कथं तान् त्यक्तुम् उत्सहे"(भाग.पुरा.9।4।65) इति भगवद्-वाक्यात्. परप्राप्तिरूपत्वाच्च भोगस्य न नाशसम्भावना. किञ्च यत्र एकस्यैव भक्तस्य देशकालभेदेन अनेकविधलीलासम्बन्धित्वेऽपि तत्तल्लीलासम्बन्धित्वम् अनश्वरम् उच्यते, तत्र सर्वथा तदभावः कथं वक्तुं शक्यो ब्रह्मणापि. अपरञ्च. कालसाध्यो हि नश्वरः स्यात्.

न हि पुरुषोत्तमे कालः प्रभवितुं शक्नोति. “न यत्र कालो अनिमिषां परः प्रभुः”(भाग.पुरा.3।2।17) इत्यादिवाक्येभ्यः. तथाच ज्ञानमार्गीयभक्तिमार्गीययोः अनावृत्तौ तुल्यत्वेऽपि फलप्राप्तौ वैलक्षण्यात् पूर्ववाक्येन भक्तानाम् आह अनावृत्तिम्, उत्तरवाक्येन ज्ञानिनाम् इति ज्ञायते. नच फलप्रकरणान्ते अनावृत्त्युक्तेः संसाराभावएव जीवस्य परमं फलम् इति आचार्याभिप्रायो ज्ञायते इति वाच्यम्. ब्रह्मविदः परप्राप्तिं फलत्वेन उक्त्वा तत्स्वरूपस्य सर्वकामभोगत्वेन श्रुत्या निरूपणात्. सच स्वस्वाधिकारानुसारेण निवेदितार्थाङ्गीकाररूपएव इति ज्ञेयम्. तेन सएव परमं फलम्. अनावृत्तिस्तु आर्थिकी परन्तु आवृत्तौ सम्भवत्यां परमफलत्वं न उपपद्यतइति ज्ञानदुर्बल-शङ्का-निरासाय इयम् उक्ता. पुष्टिमार्गीय-भक्तविशेष-प्रवर्तक-निवर्तक-वेणुशब्दात् भगवन्निकट-गतौ अनावृत्तिः पूर्वेण उक्ता, मर्यादामार्गीयाणां वेदरूपाद् शब्दात् तदुक्तसाधनाद् अनावृत्तिं द्वितीयेन इत्यपि तात्पर्यविषयः श्लिष्टो अर्थो ज्ञेयः. तथा सति परमफलम् अग्रे स्वतएव भावी इति भावः इति अलं विस्तरेण.

इति चतुर्थाध्याये चतुर्थपादे पञ्चमं जगद्व्यापाराधिकरणम्॥5॥

जानीत परमं तत्त्वं यशोदोत्सङ्गलालितम्।
तदन्यद् इति ये प्राहुरासुरांस्तान् अहो बुधाः॥1॥
नानामतध्वान्त-विनाशनक्षमो,
वेदान्तहृत्पद्म-विकासने पटुः।
आविष्कृतोऽयं भुवि भाष्यभास्करो,
मुधा बुधा धावत नान्यवर्त्मसु॥2॥
पुरन्दरमदोद्भवप्रचुर-वृष्टिसम्पीडित-
स्वकीयवर-गोकुलावन-परायणो लीलया।
स्मितामृतसुवृष्टिभिः परिपुपोष तान् यो गिरिं
दधार च सएव हि श्रुतिशिरःसु संराजते॥3॥
श्रीकृष्णकृपयैवायं सिद्धान्तो हृदि भासते।
तेनाधिकं वरीवर्ति न वक्तव्यं हरेर्नृणाम्॥4॥
भाष्यपुष्पाञ्जलिः श्रीमदाचार्यचरणाम्बुजे।
निवेदितस्तेन तुष्टा भवन्तु मयि ते सदा॥5॥

इति श्रीमद्वेदव्यासमतवर्ति-श्रीवल्लभाचार्यविरचिते श्रीमद्ब्रह्मसूत्राणुभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः॥4॥

समाप्तः चतुर्थो अध्यायः॥4॥